१० ताः कन्याः विवाहगृहं प्रविविशुः; तदा द्वारं रुद्धं। ततोऽन्यकन्यकाः
११ समागत्य प्रावदन् हे प्रभो हे प्रभो, द्वारम् उद्घाटय। वरस्त्ववदत् सत्यं
१२ वदामि युष्मान् न वेद्मि। अतः सचेतनास्तिष्ठत मनुजपुत्त्रः कदागमि-
१३ ष्यति तद् यूयं न वित्थ।
१४ मनुजपुत्त्रस्तादृशजनतुल्यो यो दूरदेशयात्रां कुर्व्वन् दासानाहूय स्वस्व-
१५ शक्त्यनुसारतः कस्मिंश्चिन् मुद्राणां पञ्चसहस्राणि कस्मिंश्चित् द्वे सहस्रे कस्मिं
१६ श्चित् सहस्रं समर्प्य निजपथं प्रतस्थे। येन दासेन पञ्च सहस्राणि प्राप्तानि
१७ तेन तै र्वाणिज्यं कृत्वान्यपञ्चसहस्राणि वर्द्धितानि। येन द्वे सहस्रे अलभ्येतां
१८ तेन तदन्ये द्वे सहस्रे अलभ्येतां। येन चैकं सहस्रम् अलभ्यत तेन भूमिं
१९ खनित्वा ताः प्रभो र्मुद्राः प्रगोपिताः। तदनन्तरं बहुतिथकालात् तेषां
२० प्रभुः समागत्य तै र्दासैः साद्धं स्वीयप्राप्तव्यं प्रगणयामास। तदानीं येन
पञ्चसहस्राणि प्राप्तानि तेन दासेन तदन्यपञ्चसहस्राणि समानीय सम-
वादि, हे प्रभो मयि भवता पञ्च सहस्राणि समर्प्पितानि पश्य
२१ ताभिरन्यपञ्चसहस्राणि मया लब्धानि। प्रभुस्तमुवाच हे उत्तमविश्वास्य
दास त्वं धन्यः, स्तोकेन विश्वास्यो जातः, तस्मात् त्वां बहुद्रव्याधिपं करोमि
२२ त्वं स्वप्रभुसुखांशी भव। प्राप्तद्विसहस्रस्त्यावदत् हे प्रभो मयि भवता द्वे
२३ सहस्रे समर्पिते पश्य ताभ्याम् अन्ये द्वे सहस्रे मया लब्धे। प्रभुस्तमुवाच हे
उत्तम विश्वास्य दास त्वं धन्य, अल्पेन विश्वास्यो जातः, तस्मात् त्वां बहुद्रव्याधिपं
२४ करोमि त्वं प्रभुसुखांशी भव। प्राप्तैकसहस्रस्त्यावदत् प्रभो त्वां कठिनं
२५ जानामि त्वं यत्र नावपस्तत्र छिनत्सि यत्र नाकिरस्तत्र संगृह्णासि। तेन
२६ शङ्कितस्त्वन्मुद्रा भुवि गुप्तवान् पश्येता गृहाण। प्रभुः प्रत्यवदत् रे दुष्टालस
दास यत्राहं नावपं तत्र छिनद्मि यत्र नाकिरं तत्र संगृह्णामि यद्येत-
२७ ज्जानासि तर्हि वणिजि मद्धनार्पणं तवोचितं तथात्वेऽहमेत्य वृद्ध्या साकं
२८ मूलधनमलप्स्ये। अत इतः सहस्रमादाय यस्य दशसहस्राणि सन्ति तस्मै
२९ देहि यो वर्द्धयति तस्मै देयं तस्य बहु भविष्यति यस्तु नैधयति तस्य

यदस्ति तदप्यपनेयं। तमलाभकृतं दासं नीत्वा यत्र रोदनदन्तघर्षणे स्तस्तत्र ३० वहिरन्धकारे क्षिपत।

यदा मनुजसुतः पवित्रदूतैः सह स्वप्रभावेनागत्य स्वतेजोमयसिंहासन ३१ उपवेक्ष्यति तदा तत्सम्मुखे सर्व्वदेशिजना मेलिष्यन्ति। मेषपालको यथा ३२ छागेभ्यो मेषान् पृथक् करोति तथा सोपि तान् पृथक् कृत्वा मेषान् दक्षिणे ३३ छागान् वामे निधास्यति। राजा दक्षिणस्थान् जनान् वक्ष्यति मत्पित्र- ३४ नुग्रहपात्राणां युष्माकं कृते आजगदारम्भाद् यद् राज्यं परिनिर्म्मितं यूयम् तद् अधिकुरुत। यतो मयि क्षुधिते सति मह्यम् आहारम् अदत्त पिपा- ३५ सिते च सति मह्यं पेयम् अदत्त विदेशिनि मां स्वस्थानमनयत वस्त्रहीने ३६ मां वस्त्रं पर्य्यधापयत पीडिते मयि च मां वीक्षितवन्तः, मयि कारास्थे मामुपागच्छत। तदा धार्म्मिका वक्ष्यन्ति प्रभो कदा त्वां क्षुधितं पिपा- ३७ सितञ्च दृष्ट्वाभोजयामापाययाम च? कदा वा विदेशिनं दृष्ट्वा स्वस्थानम् ३८ अनयाम? कदा नग्नं दृष्ट्वा वस्त्रं पर्य्यधापयाम? कदा पीडितं कारास्थञ्च दृष्ट्वा त्वामुपायाम? तदा राजा वक्ष्यति युष्मानहं सत्यं वच्मि ममैतद् ३९ भ्रातॄणां कञ्चन क्षुद्रं प्रति यदकुरुत तन्मां प्रत्येवाकुरुत। पश्चात् ४० स वामदिक्स्थान् जनान् वदिष्यति रे शप्ताः सर्व्वे शैतान् तद्दूतानाञ्च कृते ४१ यदनन्ताग्नि र्निरूपितोस्ति यूयं मदन्तिकात् तमग्निं यात। यतः क्षुधि- ४२ ताय मह्यमाहारं पिपासिताय पेयं नादत्त विदेशिनं मां स्वस्थानं नान- यत वस्त्रहीनं मां वस्त्रं न पर्य्यधापयत पीडितं कारास्थञ्च मां न वीक्षित- ४३ वन्तः। तदनन्तरं ते जनाः संप्रवदिष्यन्ति हे प्रभो कदा त्वां क्षुधितं वा ४४ पिपासितं वा विदेशिनं वा नग्नं वा पीडितं वा कारास्थं वा दृष्ट्वा नासे- वामहि? तदानीं स तान् वदिष्यति युष्मान् अहं सत्यं वदामि यूयम् ४५ कञ्चन क्षुद्रं प्रति यन्नाकुरुत तन्मां प्रत्येव नाकुरुत। पश्चाद् इमेऽनन्त- ४६ शास्तिं किन्तु धार्म्मिका अनन्तपरमायुः संभोक्तुं प्रगमिष्यन्ति।

---

## २६ षड्विंशोऽध्यायः ।

१ ख्रीष्टविरुद्धं मुख्ययाजकाध्यापकानां कुमन्त्रणं ६ स्त्रिया ख्रीष्टाभिषेकः १४ यिहूदा-विश्वासघातित्वं १७ निस्तारोत्सवभोज्यं २६ प्रभोर्भोज्यनिरूपणं ३१ पितरस्य ख्रीष्टास्वीकारभविष्यद्वाक्यं ३६ उद्याने ख्रीष्टदुःखं ४७ तस्य परकरार्पितत्वं ५७ महायाजकस्य समीपमुपानयनं ५९ तद्विचारः ६९ पितरास्वीकारश्च।

१ अनन्तरं यीशुरेतान् प्रसङ्गान् परिसमाप्य शिष्येभ्यः कथितवान्, २ यूयं जानीथ, दिनद्वयात् परं निस्तारोत्सवः समुपस्थास्यति तत्र मानवस्य पुत्रः क्रुशे हतो भवितुं परहस्तेषु समर्पितो भविष्यति। ततःपरं ३ प्रधानयाजका अध्यापका लोकानां प्राचीनाश्च कियफानामकस्य ४ महायाजकस्याट्टालिकायाम् सर्व्वे मिलित्वा केन कौशलेन यीशुं ५ धृत्वा हन्तुं शक्नुवन्ति, एतां मन्त्रणां कर्त्तुम् आरब्धवन्तः। किन्तु ते कथितवन्तः, उत्सवसमये न भविष्यति तथा सति लोकानां मध्ये कलहो भवितुं शक्नोति।

६ बैथनियापुरे शिमोन्कुष्ठिनो गृहे यीशौ स्थिते सति काचित् स्त्री मर्म्मर-७ पाषाणपात्रे महार्घसुगन्धितैलमानीयाशनकाले तच्छिरस्यवातारयत्। ८ तद् दृष्ट्वा तच्छिष्याः क्रुधित्वावदन् ईदृगपव्ययः कुतः? एतद्विक्रीय बहु-९ मूल्यं दरिद्रेभ्यो दातुमशक्ष्यत। यीशुस्तद् विज्ञाय तानवदत् तां स्त्रियं १० कुतो दुःखिनीकुरुत? सा मयि सत् कर्म्माकार्षीत् युष्मदन्तिके दरिद्राः ११ सदा तिष्ठन्ति, अहन्तु सदा न तिष्ठामि। अपरं सा नारी मदीयशरीरो-१२ परि तत्सुगन्धितैलम् अवतार्य्य मम श्मशाने स्थापनकर्म्म कृतवती। १३ अतएव युष्मानहं सत्यं व्याहरामि यत्र यत्रैष सुसंवादः प्रचारिष्यते तत्र तत्रैतां योषितं स्मर्त्तुम् एतस्य कर्म्मणः कथा प्रचारयिष्यते।

१४ तदनन्तरं द्वादशनां शिष्याणां मध्यवर्त्तीष्करियोतीययिहूदानामक एकः प्रधानयाजकानां समीपं समागम्य कथितवान् यदि यीशुं युष्माकं १५ करेषु समर्पयाम्यहं तदा यूयं मह्यं किं दास्यथ? तदानीं ते तस्मै त्रिंशन् १६ मुद्रा दातुं सम्यक् स्वीरीकृतवन्तः। तस्मात् स तत्कालमारभ्य तं परकरेषु समर्पयितुं सुयोगं चेष्टितुं समारभत।

अकिण्वपूपोत्सवप्रथमेऽह्नि शिष्या यीशुमुपागत्याप्राक्षुः, त्वदर्थं कुत्र १७ निस्तारोत्सवभोज्यमायोजयाम तव केच्छा? तदा सोवदत् पुरेऽमुकमुपा- १८ गत्य वदत गुरुराह मत्कालो निकटः शिष्यैः मह त्वद्गृहे निस्तारोत्सव- भोज्यं भोक्ष्ये। शिष्यास्तस्य यथादेशं कृत्वा तत्र भोज्यमसज्जयन्। सन्ध्यायां १९ सत्यां स द्वादशशिष्यैः सहोपविष्टः। तेषु भुञ्जानेषु सोऽवदत् युष्मान् सत्यं २० वच्मि युष्माकमेको मां परकरेषु समर्पयिष्यति। तदानीं तेऽतीवदुःखिता २१ एकैकोवदत् हे प्रभो स किमहं? सोवदत् मया साकं यो भोज्यपात्रे करं २२ मज्जयिष्यति स मां परकरेषु समर्पयिष्यति। अपरञ्च मनुजसुताय यथा २३ लिखितं तथैव भविष्यति येन तु जनेन स परकरेषु समर्पिष्यते हा तं २४ तज्जन्माभावो भद्र आसीत्। तदानीं येन यिहूदानामधेयकजनेन स २५ यीशुः परेषां करेषु समर्पिष्यते सएव कथितवान् हे गुरो स किम् अहम्? ततः स कथितवान् त्वं सत्यम् अकथयः।

ततःपरं तेषां भोजनकाले यीशुः पूपमादायेश्वरगुणं संकीर्त्त्य भंक्त्वा २६ शिष्येभ्यो दत्त्वावदत् एष मत्कायो युष्माभि र्गृहीत्वा भुज्यतां। तदनन्तरं २७ स कंसमादायेश्वरगुणमुक्त्वा तेभ्यो दत्त्वावादीत् सर्व्वै र्युष्माभिरनेन पीयतां; २८ अनेकपापमार्जनार्थं पातितमन्नव्यनियमरक्तमिदं। अपरं युष्मान् वच्मि २९ यावत् पितूराज्ये युष्माभिः सह नव्यद्राक्षारसं न पास्यामि तावद् द्राक्षारसं ३० पुन र्न पास्यामि। पश्चात् ते गीतमेकं संगीय जैतुन् पर्व्वतमगमन्।

तदानीं यीशुस्तानवदत् निशायामस्यामहं युष्माकं विघ्नो भविष्यामि ३१ यतो लिखितमास्ते।

'मेषाणां रक्षकञ्चाहं प्रहरिष्यामि वै ततः।
मेषाणां निवहोनूनं प्रविकीर्णो भविष्यति।'

अहन्तु श्मशानादुत्थाय युष्मदग्रे गालीलं यास्यामि। ततः पितरस्त- ३२ माख्यत् त्वं चेत् सर्व्वेषामन्तरायो भवेस्तथापि मम नहि। तदा यीशु- ३३ स्तमाख्यत् त्वां सत्यं वच्मि रात्रावस्यां कुक्कुटरवात् पूर्व्वं मां त्रिरपह्नो- ३४ ष्यसे। ततः पितरस्तस्मै कथितवान् यद्यपि त्वया सार्द्धं मया मर्त्तव्यं ३५

भवति तथापि त्वां कदापि नाहम् अपह्नोष्ये तदा सर्व्वे शिष्या अपि
तदनुसारतः कथितवन्तः।

३६ यीशुः शिष्यैः सह गेत्शिमनीं गत्वा तानवदत् तत्र गत्वा यावत् प्रार्थये
३७ तावत् यूयमत्रोपविशत। स पितरं सिवदेः पुत्रौ च गृहीत्वा गतः शोचन्न-
३८ तिव्यथितश्च। पश्चात् तानवदन् मृतियातनावत् ममातियातना जायते
३९ यूयमत्र मया सह तिष्ठन्तो जागृत। ततः स किञ्चिद् दूरं गत्वा न्यङ्मुखः
पतन् इति प्रार्थयत हे मत्पितः, चेत् शक्यं तर्हि पात्रमिदं मत्तो दूरी-
४० भवतु किन्तु मदिच्छया न भूयात् त्वदिच्छया भवेत्। अनन्तरं स शिष्या-
नुपागत्य तान् निद्रितान् दृष्ट्वा पितरमवदत् यूयं मया सह किमेकदण्डमपि
४१ जागरितुं न शक्नुथ? परीक्षायामपतनाय जागृत प्रार्थयध्वञ्च आत्मा
४२ सोद्योगः कायस्तु दुर्ब्बलः। पुनरपि स गत्वा इति प्रार्थयत हे मत्पित नै
४३ पीते चेदिदं पात्रं मत्तो दूरं गन्तुं न शक्यं तर्हि त्वदिच्छावद् भवेत्।
स पुनश्चागत्य तान् निद्रितानपश्यत् तेषां नेत्राणि निद्रया पूर्णानि
४४ स्थितानि। स तान् विहाय पुनश्चागत्य तृतीयवारं पूर्व्ववत् कथाम् उक्त्वा
४५ प्रार्थयत। तदा शिष्यानुपागत्यावदत् शयानाः किं विश्राम्यथ? पश्यत काल
४६ उपास्थात् मनुजपुत्रश्च परकरेषु समर्प्यते। उत्तिष्ठत वयं याम यो मां
परकरेषु समर्पयिष्यति पश्यत स समीपमायाति।

४७ एतत्कथायाः कथनकाले द्वादशशिष्याणां यिहूदा मुख्ययाजकप्राचीनैः
४८ प्रेषितान् असियष्टिधारिजनान् गृहीत्वा तदन्तिक उपास्थात्। स पर-
करार्पकः पूर्व्वं तेभ्य इति समकेतयत् यमहं चुम्बिष्ये स एव स यूयं तं धरत।
४९ अपरञ्च स तत्क्षणाद् यीशुमुपागम्य हे गुरो प्रणमामीत्युक्त्वा तं चुम्बित-
५० वान्। तदानीं यीशुस्तमाख्यत् हे मित्र किमर्थमेषि? तदा ते समागत्य
५१ तमाक्रम्याधरन्। ततो यीशुसङ्गिनामेकः कोषादसिं निःसार्य्य महायाज-
५२ कस्य दासमाहत्य तत्कर्णम् एकं छिन्नवान्। ततो यीशुस्तमाख्यत् खङ्गं स्व
५३ स्थाने निधेहि ये खङ्गं धारयन्ति त एव खङ्गेन हन्यन्ते। अपरञ्च स्वर्गीय-
दूतानां द्वादशसैन्याधिकं प्रेषयितुं तमधुनाहं पितारं प्रार्थयितुं न

शक्नोमीति किं त्वं बुध्यसे? तथा सतीति भवितव्यं धर्म्मपुस्तकस्यैतद्वाक्यं ५४ कथं सेत्स्यति? ततो यीशु र्लोकानाख्यत् यूयं खङ्गयष्टीरादाय किं मां चौरं ५५ धर्त्तुमागताः? प्रत्यहमहं युष्माभिः सह मन्दिर उपविश्योपदिशं तदा मां नाधरत किन्तु भविष्यद्वादिवाक्यसिद्ध्यर्थमेतानि जातानि। तदा सर्व्वे ५६ शिष्यास्तं त्यक्त्वा पलायन्त।

तदनन्तरं ते सर्व्वे लोका यीशुं धृत्वा यत्र स्थाने अध्यापका लोकानां ५७ प्राचीनाश्च सभायां कृत्वा समुपाविशन् तत्र कियफानामकस्य महा-याजकस्य समीपं समनयन्। किन्तु शेषे किं भविष्यति तदेव द्रष्टुं पितरो ५८ दूरे ततपश्चाद् गच्छन् महायाजकस्याट्टालिकायां प्रवेशं कुर्व्वन् दासानां सङ्गे समुपाविशत्।

मुख्ययाजकप्राचीनमन्त्रिणो यीशुं हन्तुं मृषासाक्षिणोऽचेष्टन्त किन्तु ५९ नालभन्त। बहुमृषासाक्षिष्वागतेष्वपि साक्ष्यं नालभन्त। शेषे द्वौ मृषा- ६० साक्षिणावित्याथमवदद् अहमीश्वरमन्दिरं भंक्त्वा दिनत्रयमध्ये निर्म्मातुं ६१ शक्नोमीति साक्ष्यमदुः। महायाजक उत्थाय यीशुमाख्यत् त्वं किमप्युत्तरं ६२ न ददासि? एते त्वयि किं साक्ष्यं ददति? यीशुस्तु मौनी स्थितः। याजकोवदत् त्वाममरेश्वरेण शापयामि त्वमीश्वरपुत्रोभिषिक्तस्त्राता न ६३ वेति? वद। यीशुः प्रत्याख्यत् त्वं सत्यमवदः, युष्मानहं सत्यं वच्मि, इतः- ६४ परं मनुजपुत्रं सर्व्वशक्तिमतो दक्षिणपार्श्वे तिष्ठन्तं नभोमेघमारुह्यायान्तञ्च द्रक्ष्यथ। महायाजको वस्त्रं छित्वाख्यत् अयमीश्वरमनिन्दत् अन्यसाक्ष्ये ६५ किं प्रयोजनं? पश्यत यूयमस्यास्यादीश्वरनिन्दामश्रौष्ट। युष्माभिः किं ६६ विविच्यते? ते प्रत्याख्यन् अयं बधमर्हति। तदनन्तरं लोकास्तदीयवदने ६७ निष्ठीवं निधत्तवन्तः केचित् तलेन केचिच्च चपेटेनाहत्य कथितवन्तः ६८ हे अभिषिक्तत्रातः कस्त्वां चपेटेनाहतवान् एतद् गणयित्वा त्वम् अस्मभ्यं कथय।

पितरो वहिरट्टालिकायामुपविश्यासीत् तदा काचिद्दासी तमुपा- ६९ गत्यावदत् त्वमपि गालीलीययीशोः सङ्गी। स तु सर्व्वसमक्षमस्वीकृत्याख्यत् ७०

७१ त्वं किमाख्यासीति न बुध्येऽहं। तस्मिन् चत्वरं गतेऽन्या दासी तं दृष्ट्वा तत्र
७२ लोकानाख्यत् अयमपि नासिरीययीशोः सङ्गी। स शप्त्वा पुनरपह्नूयाख्यत्
७३ तं मनुजं न परिचिनोमि। ततःपरं तत्रस्थजना एत्य पितरमाख्यन् त्वमवश्यं
७४ तेषामेकोसीति त्वदुच्चारणं प्रकाशयति। स तु शपथेनाभिशापेन चाख्यत्
७५ तं न परिचिनोमि; अपरं तत्क्षणात् कुक्कुटोऽरौत्। कुक्कुटरवात् पूर्व्वं
त्रिरपह्नोष्यसे, इति यीशुनोक्तं स्मृत्वा पितरो वहिर्गत्वा महाखेदेनारोदत्।

---

२७ सप्तविंशोऽध्यायः।

१ पिलाते ख्रीष्टार्पणं २ यिहूदानुतापो मरणञ्च ११ पिलातसाक्षात् ख्रीष्टस्वीकरणं मौनञ्च १५ लोकरीतिः १९ पिलाताचरणं २७ हन्तुं ख्रीष्टयापनं ३२ क्रुशे हननं ३९ व्यङ्गोक्तिः ४५ क्रुशेऽार्त्तरावः ५० मरणाश्चर्य्यलक्षणं ५५ योषिदुपगमः ५७ ख्रीष्टस्य श्मशाने स्थापनं ६२ पुररक्षकैरक्षणञ्च।

१ तदनन्तरं प्रभाते सति प्रधानयाजका लोकानां प्राचीनाश्च यीशुं
२ हन्तुं तद्विरुद्धं मन्त्रयित्वा बद्ध्वा नीत्वा पन्तियपिलातनामकस्याधिपतेः
समीपे समार्पयन्।

३ यीशोः परकरार्पकयिहूदास्तत्प्राणदण्डाज्ञां ज्ञात्वा सन्तप्य प्रधान-
४ याजकलोकप्राचीनानुपागत्य तन्त्रिंशन्मुद्रा दत्त्वाख्यत् निर्दोषस्यास्य
परकरार्पणाद् अहं पापमकार्षं ततस्तेऽवदन् तेनास्माकं किं? त्वया तद्
५ बुध्यतां। तदनन्तरं यिहूदा मन्दिरे तन्मुद्रा निःक्षिप्य गतस्ततः स्वयं
६ स्वमुदबध्नात्। ततःपरं प्रधानयाजकास्तन्मुद्रा आदायाख्यन् एता मुद्रा
७ रक्तमूल्या अतोभाण्डागारे न निधातव्याः। पश्चात् ते मन्त्रयित्वा विदेशि-
८ श्मशानाय तन्मुद्राभिः क्षेत्रमक्रीणन् तस्मादद्यापि तत्क्षेत्रं रक्तक्षेत्रमिति
९ वदन्ति। इत्थं सतीस्रायेलः सन्तानास्त्रिंशन्मुद्रास्तन्मूल्यं निरूप्य तन्मुद्रा
१० गृहीत्वा परमेश्वरनिरूपणानुसारात् कुलालक्षेत्रं क्रेष्यन्तीति यिखरिय-
भविष्यद्वाद्युक्तं वाक्यं तदानीं सिद्धमभूत्।

११ ततः परं यीशौ तदधिपतिसम्मुखे स्थिते सति स तमपृच्छत् त्वं किं
१२ यिहूदिनां राजा? यीशुनोक्तं त्वं सत्यमवादीः। किन्तु मुख्ययाजकप्राचीनैः
१३ स उपोदितोपि किमपि न प्रत्यवदत्। पश्चात् पिलातस्तमाख्यत् इमे त्वद्वि-

पक्षतया कति कति साक्ष्यं ददति तत् किं त्वं न शृणोषि? तथापि स तेषां १४
कस्यापि वाक्यस्य नोत्तरमदात् तेन सोऽधिपोऽतिचित्रममंस्त।

अपरञ्च तदोत्सवेऽधिपतेरितिरीतिरासीत् जना यं बन्धिनमिच्छन्ति १५
तमेवामोचयत्। तदा कश्चित् बरब्बानामा ख्यातबन्ध्यासीत्  ततो लोकेषु १६
मिलितेषु पिलातस्तानपृच्छत् अयं बरब्बा बन्धी तथा ख्रीष्टविख्यातयीशु- १७
श्चानयोरुभयोः कं जनं मोचयिष्ये केच्छा युष्माकं? तैरीर्षया यत् १८
यीशुः समर्पित इति स सम्यक् परिज्ञातवान्।

अपरञ्च विचारासनोपवेशनकाले पिलातपत्नी लोकं प्रेष्य तं प्रत्याख्यत् १९
तद्धार्म्मिकमनुजं प्रति त्वया किमपि न कर्त्तव्यं यतस्तमधि स्वप्ने मया बहुधा
दुःखमाप्तं। मुख्ययाजकाः प्राचीना बरब्बां याचितुं यीशुं हन्तु लोकान् २०
प्रावर्त्तयन्। अधिपस्तानपृच्छत् अनयोः कं मोचयामि केच्छा युष्माकं? २१
तेऽवदन् बरब्बां। पिलातोऽपृच्छत् यं ख्रीष्टं वदन्ति तं यीशुं किं करिष्ये? २२
सर्व्वैरुक्तं स क्रुशे विध्यतां। अधिपोऽवदत् कुतः? स कां दुष्क्रियामकरोत्? ते २३
पुनरुच्चैराख्यन् स क्रुशे विध्यतां। स्ववाक्यं न ग्राह्यं पुनः कलहोऽभूत् पिलात २४
इति दृष्ट्वा लोकसमक्षं तोयेन करौ प्रक्षाल्याख्यत् धार्म्मिकस्यास्य रक्त-
पातेऽहमदोषो यूयं तद् बुध्यध्वं। तदानीं सकला लोकाः प्रत्युत्तरं प्राददुः २५
तदीयरक्तपातनस्यापराधो ऽस्माकम् अस्माकं सन्तानानाञ्चोपरि सम्भ-
वतु। तस्मात् स तेषां समीपे बरब्बां मोचितवान् अपरं यीशुं कशया २६
प्रहृत्य क्रुशे वेधितुं समर्पितवान्।

अधिपस्य सेना अधिपगृहं यीशुं नीत्वा सर्व्वसैन्यं तमुपसमगृह्णन्। ते तद्वस्त्रं २७
मोचयित्वा तं कृष्णरक्तवस्त्रं पर्य्यधापयन्। कण्टकमुकुटं निर्माय तच्छि- २८
रस्यदुः तद्दक्षिणकरे वेत्रं दत्त्वा तत्सम्मुखे जानुपातं कृत्वा हे यिहूदिनां २९
राजन् नम इत्युक्त्वा तमगर्हयन्त। तद्गात्रे न्यष्ठीव्यन् वेत्रं नीत्वा शिरसि ३०
तेनाघ्नन्। इत्थं तं गर्हयित्वा तद्वस्त्रममोचयन् पुनः स्ववस्त्रं परिधाप्य क्रुशे ३१
वेधितुमनयन्। तदनन्तरं तेषां बहिर्गमनसमये कुरीणीयशिमोन्नामा- ३२
नम् एकं जनं प्राप्य क्रुशवहननिमित्तं तं ते धृतवन्तः।

३३ तदनन्तरं गुलगल्तार्थात् शिरः कपालनामकस्थान उपस्थाय पित्त-
३४ मिश्रिताम्लरसं ते पातुं यीशवे ददुः स तु तदास्वाद्य नापिवत्। ते तं क्रुशे
३५ विद्ध्वा तत्परिच्छदं गुटिकापातेन विभज्याग्रहीषुस्तेन

'विभजन्तेऽधरीयं ते वस्त्रं मम परस्परम्।
ममोत्तरीयवस्त्रार्थं गुटिकां पातयन्ति च।

३६ भविष्यद्वाद्युक्तमिति वाक्यं तदानीं सफलमभूत्। ततःपरं ते तत्रोपविश्य
३७ तद्रक्षणे नियुक्ता आसन्। अपरम् अयं यिहूदिनां राजा यीशुरित्यपवाद-
३८ लिपिपत्रं तच्छिरसि लागितवन्तः। तदनन्तरं तदीयवामदक्षिणोभय-
पार्श्वयोरुभौ चौरौ तेनैव साकं क्रुशे समविध्यन्।

३९ तदा पथिकाः शिरांस्यान्दोल्य हे ईश्वरमन्दिरं भंक्त्वा दिनत्रये तन्नि-
४० र्मातः स्वं रक्ष त्वं चेदीश्वरपुत्रोसि तर्हि क्रुशादवरोह,इत्युक्त्वा तमकुत्सयन्त।
४१ मुख्ययाजकप्राचीनाध्यापकाश्च तथा गर्हयित्वाख्यन् सोन्यानरक्षत् स्वन्तु
४२ रक्षितुं न शक्नो यदीस्रायेलो राजास्ति तर्हीदानीं क्रुशादवरोहतु तेन तं
४३ प्रत्येष्यामः। तेनेश्वरे प्रत्याशा कृता यदीश्वरस्तस्मिन् तुष्यति तदाधुना तं
४४ रक्षेत् यतः सोवददीश्वरपुत्रोहं। यौ स्तेनौ तेन सह क्रुशे विद्धौ तौ
तमनिन्दतां।

४५ दिवा द्वितीययामात् तृतीययामं यावत् कृत्स्नदेशो ध्वान्तमयोभूत् तृती-
४६ ययामे एली एली लामा शिवक्तनी,अर्थात् 'हे मदीश मदीश त्वं पर्य्य-
४७ त्याक्षीः कुतो हि मां' यीशुरुच्चैरित्यवदत्। तत्र स्थिताः केचित्तत् श्रुत्वा-
४८ वदन् अयमेलीयमाकृयति। तेषामेको धावन् स्पञ्जमादाय तत्राम्लरसं
४९ निधाय नलेन तस्मै पातुं दत्तवान्। अन्येऽवदन् तिष्ठ तमवितुम् एलीय
एति नवेति पश्याम।

५० यीशुः पुनरुच्चैराहूय स्वात्मानं समार्पयत्। तेन मन्दिरस्य यवनिका
५१ ऊर्द्ध्वादधः पर्य्यन्ता विदीर्णा सती द्विखण्डा समभवत् भूमिकम्पश्चाभवत्
५२ पर्व्वताश्च विदीर्णा अभवन्। अपरञ्च श्मशानेषु मोचितेषु अनेकेषां

पुण्यवतां सुप्ता देहा उदतिष्ठन्। ततः श्मशानेभ्यो बहिर्गत्वा तस्योत्थानात् ५३ परं पुण्यनगरं गत्वा बहुभ्यो लोकेभ्यो दर्शनं दत्तवन्तः। ततःपरं यीशोः ५४ परिरक्षणकर्म्मणि नियुक्तो यः शतसेनापति र्ये च तस्य सङ्गिनस्ते सर्व्वे एतादृशा भूमिकम्पादिघटना विलोक्य महाभययुक्ता अकथयन् अयं नितान्तम् ईश्वरस्य पुत्रो भवति।

तदानीं या बह्वो योषितो यीशुं सेवमाना गालीलो यीशोः पश्चाद् ५५ आगतास्तास्तथा तासां मध्ये मग्दलिनी मरियम् तथा याकुबो योसेश्च ५६ माता मरियम् सिवदिपुत्रयोश्च माता एता योषितो दूरे तिष्ठन्त्यो दृष्टवत्यः।

सन्ध्यायां सत्याम् अरिमथीयपुरस्य युषफ्नामा धनी यीशोः शिष्यत्वात् ५७ पिलातमुपागत्य यीशोर्देहमयाचत। देहं दातुं पिलातेनादिष्टे सति युषफ् ५८ तं देहं नीत्वा शुचिवस्त्रेणावेष्ट्य स्वार्थं शैले खनिते श्मशाने निधाय तद्द्वारे ५९ पाषाणं लुण्ठयित्वा स्वस्थानं समगच्छत्। किन्तु मग्दलिनी मरियम् ६० तदन्या मरियम् च द्वे एते योषितौ तस्य श्मशानस्य सम्मुखे समुपविश्य ६१ समतिष्ठताम्।

निस्तारोत्सवायोजनदिने मुख्ययाजकफिरूशिनो मिलित्वा पिलातमुपा- ६२ गत्यावदन् हे महेच्छ स प्रतारको जीवन्नकथयत् दिनत्रयात् श्मशाना- ६३ दुत्थास्यामि कथैषास्माभिः स्मर्य्यते तस्मात् तृतीयदिनं यावत् तत्श्मशानं ६४ रक्षितुमादिशतु नोचेत् तच्छिष्या रात्रौ तं हृत्वा लोकान् वक्ष्यन्ति स श्मशानाद् उदस्थित इति, तथात्ते प्रथमभ्रान्तेः शेषभ्रान्ति र्महती भवेत्। तदा पिलातोवदत् युष्माकमन्तिके रक्षकाः सन्ति गत्वा यथासाध्यं ६५ रक्षयत। तस्मात् ते प्रगत्य तस्य श्मशानस्य द्वारस्थितं प्रस्तरं मुद्राङ्कितं ६६ विधाय रक्षकजनान् स्थापयित्वा तत्श्मशानस्थानं समरक्षयन्।

## २८ अष्टाविंशोऽध्यायः।

१ ख्रीष्टोत्थानं ११ रक्षकोत्कोचदानं १६ शिष्याणां ख्रीष्टदर्शनं तदाज्ञालाभश्च।

१ विश्रामवारशेषे सप्ताहप्रथमदिनप्रभाते सति मग्दलनीमरियम् अन्य-
२ मरियम् च श्मशानं द्रष्टुमायातां। तदातिभूकम्पोऽभूत् परमेश्वरदूतः
३ स्वर्गादवरुह्य द्वारात् पाषाणं समपसार्य्य तदुपर्य्युपाविशत्। तदास्यं तडि-
४ द्वत्तेजस्वि तद्वस्त्रं हिमवत् शुक्लं। तदा रक्षकास्तद्भयात् कम्पिता मृता-
५ इवाभवन्। स दूतः स्त्रियौ समवदत् मा भैष्टं युवां क्रुशे हतं यीशुं मृगयेथां
६ तदहं वेद्मि। सोऽत्र नास्ति स यथावदत् तथोत्थितवान् प्रभोः शयनस्थानं पश्यतं।
७ तूर्णं गत्वा तच्छिष्यानिति वदतं स श्मशानादुदस्थात् युष्मत् प्राक् गालीलं
८ यास्यति यूयं तत्र तं द्रक्ष्यथ इति वार्त्तां युवामवदम्। ते भयानन्दाभ्यां
९ श्मशानात् शीघ्रं वहिर्भूत्वा तच्छिष्यान् वार्त्तां वक्तुमधावताम्। किन्तु
शिष्यान् वक्तुं यातस्तदा यीशुर्दर्शनं दत्त्वा ते आख्यद् युवयो मङ्गलं भूयात्
१० ते एत्य तच्चरणौ धृत्वा प्राणमतां। यीशुस्ते आख्यत् मा भैष्टं गत्वा गालीलं
गन्तुं मद्भ्रातृन् वदतं तत्र ते मां द्रक्ष्यन्ति।
११ स्त्रियौ गच्छत एतर्हि रक्षकानां केचित् पुरं गत्वा यद्यद् अघटत तत्सर्व्वं
१२ मुख्ययाजकान् न्यवेदयन्। ते प्राचीनैः साकं सभां कृत्वा मन्त्रयित्वा तत्से-
१३ नाभ्यः प्रचुरमुद्रा दत्त्वावदन् अस्मासु निद्रितेषु तच्छिष्या रात्रौ तं हृत्वा-
१४ नयन् इति यूयं प्रचारयत। चेदेषा कथाधिपस्य कर्णगोचरीस्यात् तदा तं
१५ बोधयित्वा युष्मान् रक्षिष्यामः। तस्मात् ते जनास्ता मुद्राः परिगृह्य
तत्शिक्षाया अनुसारतः कर्म्म कृतवन्तः; तेन यिहूदीयलोकानां मध्ये
अद्यापि तस्याः कथाया जनश्रुति र्विद्यते।
१६ एकादशशिष्या यीशुनिरूपितगालीलो गिरिमगमन् तत्र तं दृष्ट्वा
१७ प्राणमन् केचित्तु समदिहन्। यीशुस्तानुपागत्यावदत् स्वर्गमेद्योः सर्व्वा-

धिपत्यभारो मयि समर्पितः। तस्मात् यूयं गत्वा सर्व्वदेशीयान् शिष्यान् १८
कृत्वा पितुः पुत्रस्य पवित्रस्यात्मनस्च नाम्ना तान् जनान् निमज्जयत।
अपरम् अहं युष्मान् यानि यानि समाज्ञापितवान् तानि सर्व्वाणि च १९
परिपालयितुं तान् समुपादिशत ; पश्यत जगतः शेषपर्य्यन्तमेव युष्माभिः २०
साकम् अहम् अस्मि। इति ॥

# मार्किलिखितसुसंवादोयं॥



## १ प्रथमोऽध्यायः॥

१ मज्जकस्य योहनो वृत्तान्तः ९ ख्रीष्टस्य मज्जनं १२ तस्य परीक्षा १४ तस्य सुसंवादप्रचारः १६ एवं शिमोन् आन्द्रियोऽन्येषाञ्चाह्वानं २१ भूतग्रस्ताद् भूतबहिष्करणं २९ पितरस्य श्वश्वा आरोग्यकरणं ३२ बहूनां लोकानामारोग्यकरणं निर्जने प्रार्थनं ४० कुष्ठिन आरोग्यकरणञ्च।

१ ईश्वरपुत्रस्य यीशुख्रीष्टस्य सुसंवादारम्भः। भविष्यद्वादिनां ग्रन्थेषु २ लिपिरित्थमास्ते।

'पश्य स्वकीयदूतन्तु तवाग्रे प्रेषयाम्यहम्।
गत्वा त्वदीयपन्थानं स हि परिष्करिष्यति।'
३ 'परमेशस्य पन्थानं परिष्कुरुत सर्व्वतः।
तस्य राजपथञ्चैव समानं कुरुताधुना।
प्रान्तरे वै त्विदं वाक्यं वदतः कस्यचिद्रवः।'

४ स एव योहन् प्रान्तरे मज्जितवान् तथा पापमार्जननिमित्तं मनो-५ व्यावर्त्तकमज्जनस्य कथाञ्च प्रचारितवान्। ततो यिहूदादेशयिरूशालम्-नगरनिवासिनः सर्व्वे लोका वहि र्भूत्वा तस्य समीपमागत्य स्वानि स्वानि ६ पापान्यङ्गीकृत्य यर्द्दननद्यां तेन मज्जिता बभूवुः। अस्य योहनः परिधेयानि क्रमेलकलोमजानि तथा तस्य कटिबन्धनं चर्म्मजातम् एवं पूक-७ कीटा वन्यमधूनि च तस्य भक्ष्याणि। स प्रचार्य्य कथयाञ्चक्रे, अहं नम्रीभूय यस्य पादुकाबन्धनं मोचयितुमपि न योग्योस्मि, एतादृश एकः पुरुषो ८ मत्तो गुरुतरः पश्चादागच्छति। अहं युष्मान् जले मज्जितवान् किन्तु स पवित्रात्मनि संमज्जयिष्यति।

९ अपरञ्च तस्मिन्नेव काले गालील्प्रदेशस्य नासिरिद्ग्रामाद् यीशुरा-१० गत्य योहना यर्द्दननद्यां मज्जितोऽभूत्। स जलादुत्थितमात्रात्

मेघद्वारं मुक्तं कपोतवत् स्वस्योपरि अवरोहन्तमात्मानञ्च दृष्टवान्।
एवं त्वं मम प्रियः पुत्रस्त्वय्येव मम महासन्तोष इयमाकाशीया वाणी ११
बभूव।

तस्मिन् काले आत्मा तं प्रान्तरमध्यं निनाय। अथ स चत्वारिंशद्दि- १२
नानि तस्मिन् स्थाने वन्यपशुभिः सह तिष्ठन् शैताना परीक्षितः; पश्चात् १३
स्वर्गीयदूतास्तं सिषेविरे।

अनन्तरं योहनि बन्धनालये बद्धे सति यीशु गालील्प्रदेशमागत्य १४
ईश्वरराज्यस्य सुसंवादं प्रचारयन् कथयामास कालः सम्पूर्ण ईश्वर- १५
राज्यञ्च समीपमागतं; अतोहेतो यूयं मनांसि व्यावर्त्तयध्वं सुसंवादे च
विश्वसित।

तदनन्तरं स गालीलीयसमुद्रस्य तीरे गच्छन् शिमोन् तस्य भ्राता १६
आन्द्रियनामा च इमौ द्वौ जनौ मत्स्यधारिणौ सागरमध्ये जालं प्रक्षिपन्तौ १७
दृष्ट्वा तावावदत् युवां मम पश्चादागच्छतं युवामहं मनुष्यधारिणौ
करिष्यामि। ततस्तौ तत्क्षणमेव जालानि परित्यज्य तस्य पश्चाद् जग्मतुः। १८
ततः परं तत्स्थानात् किञ्चिद् दूरं गत्वा स सिवदीपुत्रयाकुब् तद्भ्रात १९
योहन् च इमौ नौकायां जालानां जीर्णमुद्धारयन्तौ दृष्ट्वा तावाह्वयत्।
ततस्तौ नौकायां वेतनभुग्भिः सहितं स्वपितरं विहाय तत्पश्चादीयतुः। २०

ततः परं कफर्नाहूम् नामक नगरमुपस्थित्य स विश्रामदिवसे भजन- २१
गृहं प्रविश्य समुपदिदेश। एवं तस्योपदेशाल्लोका आश्चर्यं मेनिरे २२
यतः सोऽध्यापकाइव नोपदिश्य प्रभाववानिव प्रोपदिदेश। अपरञ्च तस्मिन् २३
भजनगृहे अपवित्रभूतेन ग्रस्त एको मानुष आसीत्। स चीत् शब्दं कृत्वा २४
कथयाञ्चक्रे भो नासिरीययीशो त्वमस्मान् त्यज त्वया सहास्माकं कः
सम्बन्धः? त्वं किमस्मान् नाशयितुं समागतः? त्वमीश्वरस्य पवित्र- २५
लोक इत्यहं जानामि। तदा यीशुस्तं तर्जयित्वा जगाद तूष्णीं भव इतो
वहिर्भव च। ततः सोऽपवित्रभूतस्तं सम्पीड्य अत्युच्चैः शीत्कृत्य निर्जगाम। तेनैव २६
सर्व्वे चमत्कृत्य परस्परं कथयाञ्चक्रिरे, अहो किमिदं? कीदृशो नव्य उपदेशः? २७

अनेन प्रभावेन अपवित्रभूतेषु आज्ञापितेषु ते तदाज्ञानुवर्त्तिनो भवन्ति।
२८ तदा तस्य यशो गालीलश्चतुर्दिक्स्थसर्व्वदेशान् व्याप्नोत्।
२९ 　अपरञ्च ते भजनगृहाद् वहिर्भूत्वा याकुब् योहन्भ्यां सह शिमोन
३० आन्द्रियस्य च निवेशनं प्रविविशुः। तदा पितरस्य श्वश्रू ज्वरपीडिता
३१ शय्यायामास्ते इति ते तं झटिति विज्ञापयाञ्चक्रुः। ततः स आगत्य तस्या हस्तौ धृत्वा तामुदस्थापयत्; तदैव तां ज्वरोऽत्याक्षीत् ततः परं सा तान् सिषेवे।
३२ 　अथास्तं गते रवौ सन्ध्याकाले सति लोकास्तत्समीपं सर्व्वान् रोगि-
३३ णो भूतधृतांश्च समानिन्युः। सर्व्वे नागरिका लोका द्वारि संमिलिताश्च।
३४ ततः स नानाविधरोगिणो बहून् मनुजानरोगिणश्चकार तथा बहून् भूतान् त्याजयाञ्चकार तान् भूतान् किमपि वाक्यं वक्तुं निषिषेध च
३५ यतोहेतोस्ते तमजानन्। अपरञ्च सोऽतिप्रत्यूषे वस्तुतस्तु रात्रिशेषे समुत्थाय
३६ वहिर्भूत्वा निर्जनं स्थानं गत्वा तत्र प्रार्थयाञ्चक्रे। अनन्तरं शिमोन् तत्-
३७ सङ्गिनश्च तस्य पश्चाद्गतवन्तः। तदुद्देशं प्राप्य तमवदन् सर्व्वे लोकास्त्वा
३८ मृगयन्ते। तदा सोऽकथयत् आगच्छत वयं समीपस्थं नगरं यामः, यतोहं
३९ तत्र कथां प्रचारयितुं वहिरागमम्। अथ स तेषां गालील्प्रदेशस्य सर्व्वेषु भजनगृहेषु कथाः प्रचारयाञ्चक्रे भूतानत्याजयच्च।
४० 　अनन्तरमेकः कुष्ठी समागत्य तत्सम्मुखे जानुपातं विनयञ्च कृत्वा
४१ कथितवान् यदि भवान् इच्छति तर्हि मां परिष्कर्त्तुं शक्नोति। ततः कृपालु र्यीशुः करौ प्रसार्य्य तस्याङ्गानि स्पृष्ट्वा कथयामास सम्मेच्छा
४२ विद्यते त्वं परिष्कृतो भव। एतत्कथायाः कथनमात्रात् स कुष्ठी रोगान्मुक्तः
४३ परिष्कृतोऽभवत्। तदा स तं विसृजन् गाढमादिश्य जगाद सावधानो भव
४४ कथामिमां कमपि मा वद; स्वात्मानं याजकं दर्शय तथा लोकेभ्यः स्वस्य
४५ परिष्कृतस्य प्रमाणदानाय मूसानिर्णीतं यद्दानं तदुत्सृजस्व। किन्तु स गत्वा तत् कर्म्म इत्थं विस्तार्य्य प्रचारयितुं प्रारेभे तेनैव यीशुः पुनः सप्रकाशं नगरं प्रवेष्टुं नाशक्नोत् ततोहेतोर्वहिः काननस्थाने तस्थौ; तथापि चतुर्दिग्भ्यो लोकास्तस्य समीपमाययुः।

## २ द्वितीयोऽध्यायः।

१ बहुलोकानां ख्रीष्टसमीपागमनं ३ पक्षाघातिनश्चारोग्यकरणं पापमार्जनञ्च १३ मथीनाम्न आह्वानं पापिभिः सह भोजनञ्च १८ योहनः शिष्याणां फिरूशीनाञ्चोपवासे निरुत्तरता करणं २३ विश्रामवासरे कणिशं छित्वा तद्भोजने स्वशिष्याणां निर्दोषकरणञ्च।

तदनन्तरं कतिपयदिनानि विलम्ब्य पुनः कफर्नाहूम् नगरं प्रविश्य १ गृहे स आस्ते इति किंवदन्त्या तत्क्षणं तत्समीपमेतावन्तो लोका आगत्य २ समुपतस्थु र्येन गृहमध्ये सर्व्वेषां धारणे स्थानं नाभवद् द्वारस्य चतुर्दिक्ष्वपि नाभवत् तत्काले स तान् प्रति कथां प्रचारयाञ्चक्रे।

ततः परं लोकाश्चतुर्भि र्मानवैरेकं पक्षाघातिनं वाहयित्वा तत्समीपम् ३ आनिन्युः। किन्तु जनानां बहुत्वात् तं यीशोः सम्मुखमानेतुं न शक्नुवन्तो ४ यस्मिन् स्थाने स आस्ते तदुपरिगृहपृष्ठं खनित्वा छिद्रं कृत्वा तेन मार्गेण सशय्यं पक्षाघातिनम् अवरोहयामासुः। ततो यीशुस्तेषां विश्वासं दृष्ट्वा तं ५ पक्षाघातिनं बभाषे हे वत्स तव पापानां मार्जनं भवतु। तदा कियन्तो- ६ ऽध्यापकास्तत्रोपविशन्तो मनोभि र्वितर्कयाञ्चक्रुः, एष मनुष्य एतादृशीमीश्वर निन्दां कथां कुतः कथयति? ईश्वरं विना पापानि मार्ष्टुं कस्य सामर्थ्यम् ७ आस्ते? इत्थं ते वितर्कयन्ति यीशुस्तत्क्षणं मनसा तद्बुद्ध्वा तानवदद् यूय- ८ मन्तःकरणैः कुत एतानि वितर्कयथ? तव पापानां मार्जनं भवतु यद्वा शय्यां ९ गृहीत्वा गच्छ, एतयो र्द्वयो र्मध्ये तं पक्षाघातिनं वक्तुं का कथा सुवाच्या? किन्तु पृथिव्यां पापानि मार्ष्टुं मनुष्यपुत्रस्य सामर्थ्यमस्ति, एतद् युष्मान् १० ज्ञापयितुं (स तस्मै पक्षाघातिने कथयामास) उत्तिष्ठ तव शय्यां गृहीत्वा ११ स्वगृहं याहि, अहं त्वामिदम् आज्ञापयामि। ततः स तत्क्षणम् उत्थाय १२ शय्यां गृहीत्वा सर्व्वेषां साक्षाद् जगाम; एवं सर्व्वे विस्मिता एतादृशं कर्म्म कदापि नापश्याम वयम् इमां कथां कथयित्वा ईश्वरं धन्यमब्रुवन्।

तदनन्तरं यीशुस्तत्स्थानात् पुनः समुद्रतटं ययौ; एवं लोकनिवहे १३ तत्समीपमागते स तान् समुपदिदेश। अथ गच्छन् करसञ्चयगृहे १४ आल्फीयपुत्रं लेविम् उपविष्टं दृष्ट्वा तमाहूय कथितवान् मत्पश्चात् त्वमागच्छ ततः स उत्थाय तत्पश्चाद् ययौ। अनन्तरं यीशु र्यदा तस्य १५

गृहे भोक्तुम् उपविशति तदा बहवः करसञ्चायिनः पापिनश्च तेन
१६ तत्शिष्यैश्च सहोपविविशुः यतो बहवस्तत्पश्चादाजग्मुः। स करसञ्चायिभिः पापिभिश्च सह भोजनं करोति तद् दृष्ट्वाध्यापकाः फिरूशिनश्च तस्य शिष्यानूचुः करसञ्चायिभिः पापिभिश्च सहायं कुतो भोजनं पानञ्च
१७ करोति? तद्वाक्यं श्रुत्वा यीशुः प्रत्युवाच, अरोगिलोकानां चिकित्सकेन प्रयोजनं नास्ति किन्तु रोगिणामेव; अहं धार्म्मिकानाह्वातुं नागतः किन्तु मनो व्यावर्त्तयितुं पापिन एव।

१८ ततः परं योहनः फिरूशिनाञ्चोपवासाचारिशिष्या यीशोः समीपम् आगत्य कथयामासुः योहनः फिरूशिनाञ्च शिष्या उपवसन्ति किन्तु
१९ भवतः शिष्या नोपवसन्ति किं कारणमस्य? तदा यीशुस्तान् बभाषे यावत् कालं सखिभिः सह कन्याया वरस्तिष्ठति तावत्कालं ते किमुपवस्तुं शक्नुवन्ति? यावत्कालं वरस्तैः सह तिष्ठति तावत्कालं त उपवस्तुं न शक्नुवन्ति।
२० यस्मिन् काले तेभ्यः सकाशाद् वरो नेष्यते तस्मिन् काले ते जना उपवत्स्यन्ति।
२१ कोपि जनः पुरातनवस्त्रे नूतनवस्त्रं न सीव्यति यतो हेतो र्नूतनवस्त्रेण सह
२२ सेवने कृते जीर्णं वस्त्रं छिद्यते तस्मात् पुन र्महत् छिद्रं जायते। एवं कोपि जनः पुरातनकुत्वां नूतनं द्राक्षारसं न स्थापयति यतोहेतो र्नूतनद्राक्षारसस्य तेजसा सा कुतू र्विदीर्य्यते ततो द्राक्षारसः पतति कुतूश्च नश्यति अतएव नूतनद्राक्षारसो नूतनकुत्वां स्थापनीयः।

२३ तदनन्तरं यीशु र्यदा विश्रामवारे शस्यक्षेत्रेण गच्छति तदा तस्य
२४ शिष्या गच्छन्तः शस्यमञ्जरीश्छेत्तुं प्रवृत्ताः। अतः फिरूशिनो यीशवे कथयामासुः पश्यतु विश्रामवासरे यत् कर्म्म न कर्त्तव्यं तद् इमे
२५ कुतः कुर्व्वन्ति? तदा स तेभ्योऽकथयत् दायूद् तत्सङ्गिनश्च भक्ष्याभा-
२६ वात् क्षुधिताः सन्तो यद्यत् कर्म्म कृतवन्तस्तत् किं युष्माभि र्न पठितम्? अबियाथार्नामके महायाजकतां कुर्व्वति स कथमीश्वरस्यावासं प्रविश्य यो दर्शनीयपूपो याजकान् विनान्यस्य कस्यापि न भक्ष्यस्तमेव बुभुजे
२७ सङ्गिलोकेभ्योपि ददौ। सोऽपरमपि जगाद, विश्रामवारो मनुष्यार्थ-

मेव निरूपितोस्ति किन्तु मनुष्यो विश्रामवारार्थं नैव। मनुष्यपुत्रो २८ विश्रामवारस्यापि प्रभुरास्ते।

---

३ तृतीयोऽध्यायः।

१ शुष्कहस्तलोकस्य स्वस्थतारोग्यकरणं १३ द्वादशशिष्याणां मनोनीतकरणं २० अध्यापकानां निरुत्तरकरणं ३१ कुटुम्बनिर्णयस्व।

अनन्तरं यीशुः पुन र्भजनगृहं प्रविष्टस्तस्मिन् स्थाने शुष्कहस्त एको १ मानव आसीत्। स विश्रामवारे तमरोगिणं करोति नवेत्यत्र बहवस्तम् २ अपवदितुं छिद्रमपेक्षितवन्तः। तदा स तं शुष्कहस्तं मनुष्यं जगाद मध्य- ३ स्थाने त्वमुत्तिष्ठ। ततः परं स तान् पप्रच्छ विश्रामवारे शुभमशुभं वा ४ तथा प्राणरक्षा वा प्राणनाश एषां मध्ये किं करणीयं? किन्तु ते निःशब्दा- स्तस्थुः। तदा स तेषामन्तःकरणानां काठिन्याद्धेतो र्दुःखितः क्रोधात् चतु- ५ र्दिशो दृष्टवान् एवं तं मानुषं गदितवान् तव हस्तौ विस्तारय ततस्तेन हस्त- विस्तारे कृते तद्धस्तोऽन्यहस्तवद् अरोगो जातः। अथ फिरूशिनः प्रस्थाय ६ तं नाशयितुं हेरोदीयैः सह मन्त्रयितुमारेभिरे। अतएव यीशुस्तत् ७ स्थानं परित्यज्य शिष्यैः सह पुनः सागरसमीपं गतः; ततो गालील् यिहूदा यिरूशालम् इदोमीया यर्दन्नदीपारस्थ तेभ्यः स्थानेभ्यो लोकसमूहस्तस्य पश्चाद् गतः; तदन्यः सोरसीदनोः समीपवासिलोक- ८ समूहस्य तस्य महाकर्म्मणां वार्त्तां श्रुत्वा तस्य सन्निधिमागतः। तदा लोक- ९ समूहश्चेत् तस्योपरि पतति इत्याशङ्क्य स नावमेकां निकटे स्थापयितुं शिष्यानादिष्टवान्। यतोऽनेकमनुष्याणामारोग्यकरणाद् व्याधिग्रस्ताः सर्व्वे १० तं स्प्रष्टुं परस्परं बलेन यत्नवन्तः। अपरञ्च अपवित्रभूतास्तं दृष्ट्वा ११ तच्चरणयोः पतित्वा प्रोच्चैः प्रोचुः, त्वमीश्वरस्य पुत्रः। किन्तु स तान् दृढम् १२ आज्ञाप्य स्वं परिचायितुं निषिद्धवान्।

अनन्तरं स पर्व्वतमारुह्य यं यं प्रतीच्छा तं तमाहूतवान् ततस्ते तत्स- १३ मीपमागताः। अथ शिमोन् सिवदीपुत्रो याकुब् तस्य भ्राता योहन् च १४ आन्द्रियः फिलिप् बर्थलमी मथी थोमा च आल्फीयपुत्रो याकुब् थद्दीयः १५

१६ किनानीयः शिमोन् एवं यस्तं परहस्तेष्वर्पयिष्यति स ईष्कारियो-
१७ तीयथिहूदाश्च स एतान् द्वादशजनान् स्वेन सह स्थातुं सुसंवादप्रचा-
१८ राय प्रेरिता भवितुं सर्व्वप्रकारव्याधीनां शमनकरणाय प्रभावं प्राप्तुं भूतान्
१९ त्याजयितुञ्च नियुक्तवान्। विशेषतः शिमोने पितर इत्युपनाम ददौ एवं
याकुबे योहने च विनेरिगिश् अर्थतो मेघनादस्य पुत्र इत्युपनाम ददौ।
२० अनन्तरं ते निवेशनं गताः किन्तु तत्रापि पुनर्महान् जनसमागमो
२१ ऽभवत् तस्मात्ते भोक्तुमवकाशं न प्राप्ताः। ततस्तस्य सुहृल्लोका इमां वार्त्तां
२२ प्राप्य स हतज्ञानोऽभूद् इमां कथां कथयित्वा तं धृत्वानेतुं गताः। अप-
रञ्च यिरूशालम आगता ये येऽध्यापकास्ते जगदुरस्य पुरुषस्य भूतपति-
२३ राश्रितो तेन भूतपतिना भूतान् त्याजयति। ततस्तानाहूय यीशु र्दृष्टान्तैः
२४ कथां कथितवान् शैतान् कथं शैतानं त्याजयितुं शक्नोति? किमपि
राज्यं यदि स्वविरोधेन पृथग् भवति तर्हि तद् राज्यं स्थिरं स्थातुं न
२५ शक्नोति। तथा कस्यापि परिवारो यदि परस्परं विरोधी भवति तर्हि
२६ सोपि परिवारः स्थिरं स्थातुं न शक्नोति। तद्वत् शैतान् यदि स्वविप-
क्षतया उत्तिष्ठन् भिन्नो भवति सोपि स्थिरं स्थातुं न शक्नोति किन्तूच्छिन्नो
२७ भवति। अपरञ्च प्रबलं जनं प्रथमं न बद्ध्वा कोपि तस्य गृहं प्रविश्य
द्रव्याणि लुण्ठयितुं न शक्नोति तत् कृत्वा तस्य गृहस्य द्रव्याणि लुण्ठयितुं
२८ शक्नोति। अतोहेतो र्युष्मभ्यमहं यथार्थं कथयामि मनुष्याणां सन्ताना यानि
यानि पापानीश्वरनिन्दाञ्च कुर्व्वन्ति तेषां तत्सर्व्वेषामपराधानां क्षमा
२९ भवितुं शक्नोति किन्तु यः कश्चित् पवित्रमात्मानं निन्दति तस्यापराधस्य
३० क्षमा न भविष्यति सोनन्तदण्डस्यार्हो भविष्यति। तस्यापवित्रभूतोस्ति
तेषामेतत् कथाहेतोः (स इत्थं कथितवान्)।

३१ अथ तस्य माता भ्रातृगणश्चागत्य वहिस्तिष्ठन्तो लोकान् प्रेष्य तमाहूत-
३२ वन्तः। ततस्तत्सन्निधौ समुपविष्टा लोकास्तं बभाषिरे पश्य वहिस्तव माता
३३ भ्रातरश्च त्वाम् अन्विच्छन्ति। तदा स तान् प्रत्युवाच मम माता का
३४ भ्रातरो वा के? ततः परं स स्वसमीपोपविष्टान् शिष्यान् प्रति अवलोकनं

ज्ञात्वा कथयामास पश्यतैते मम माता भ्रातरश्च। यः कश्चिद् ईश्वरस्येष्टां ३५ क्रियां करोति स एव मम भ्राता भगिनी माता च।

---

४ चतुर्थोऽध्यायः।

१ वीजवापकस्य दृष्टान्तः १० तस्य तात्पर्य्यं २१ प्रदीपस्य दृष्टान्तः २४ सावधान भवनादेशः २६ वीजवर्द्धनस्य दृष्टान्तः ३० सर्षपस्य दृष्टान्तः ३३ अन्याश्च दृष्टान्त कथाः ३५ तर्जनेन समुद्रस्य निस्तरङ्गकरणं।

अनन्तरं स समुद्रतटे पुनरुपदेष्टुं प्रारेभे; ततस्तत्र बहुजनानां समाग- १ मात् स सागरोपरि नौकामारुह्य समुपविष्टः; एवं सर्व्वे लोकाः समुद्रकूले तस्थुः। तदा स दृष्टान्तकथाभि र्बहूपदिष्टवान् उपदिश्य कथितवान्। २ अवधानं कुरुत, एको वीजवप्ता वीजानि वप्तुं गतः; वपनकाले कियन्ति ३ वीजानि मार्गपार्श्वे पतितानि तत आकाशीयाः पक्षिण एत्य तानि ४ चखादुः। एवं कियन्ति वीजानि स्वल्पमृत्तिकावत्पाषाणभूमौ पतितानि ५ तानि मृदोल्पत्वात् शीघ्रमङ्कुरितानि; किन्तूदिते सूर्य्ये दग्धानि तथा ६ मूलानामनाधोगतत्वात् शुष्काणि च। एवं कियन्ति वीजानि कण्टकिवन- ७ मध्ये पतितानि ततः कण्टकानि संवृद्ध्य तानि जग्रसुस्तानि नच फलि- तानि। तथा कियन्ति वीजान्युत्तमभूमौ पतितानि तानि संवृद्ध्य ८ फलान्युत्पादितानि, एवं कियन्ति वीजानि त्रिंशद्गुणानि कियन्ति षष्टि- गुणानि कियन्ति शतगुणानि फलानि फलितवन्ति। अथ स तानवदत् ९ यस्य श्रोतुं कर्णौ स्तः स शृणोतु।

तदनन्तरं निर्जनसमये तत्सङ्गिनो द्वादशशिष्याश्च तं तद् दृष्टान्त- १० वाक्यस्यार्थं पप्रच्छुः। तदा स तानुदितवान् ईश्वरराज्यस्य निगूढवाक्यं बोद्धुं ११ युष्माकमधिकारोस्ति किन्तु ये वहिर्भूताः 'ते पश्यन्तः पश्यन्ति किन्तु न १२ जानन्ति, एवं शृण्वन्तः शृण्वन्ति किन्तु न बुध्यन्ते चेत्तै र्मनःसु कदापि परिवर्त्तितेषु तेषां पापान्यमोचयिष्यन्त,' अतोहेतोस्तान् प्रति दृष्टान्तैरेव तानि मया कथितानि। अथ स कथितवान् यूयं किमेतद् दृष्टान्तवाक्य १३ न बुध्यध्वे तर्हि कथं सर्व्वान् दृष्टान्तान् भोत्स्यध्वे? वीजवप्ता वाक्यरूपाणि १४ वीजानि वपति; तत्र ये ये लोका वाक्यं शृण्वन्ति किन्तु श्रुतमात्रात् शैतान्

१५ शीघ्रमागत्य तेषां मनःस्थानि तानि वाक्यरूपाणि बीजान्यप-
१६ नयति तएव मार्गपार्श्वे उप्तबीजभूमिस्वरूपाः। एवं ये जना वाक्यं
श्रुत्वा परमानन्देन गृह्णन्ति किन्तु हृदि स्थैर्य्याभावात् किञ्चित् कालमात्रं
१७ तिष्ठन्ति तत्पश्चात् तद्वाक्यहेतोः कुत्रचित् क्लेशे उपद्रवे वा समुपस्थिते
१८ तदैव विघ्नं प्राप्नुवन्ति तएव उप्तबीजपाषाणभूमिस्वरूपाः। एवं ये जनाः
कथां शृण्वन्ति किन्तु सांसारिकी चिन्ता धनभ्रान्ति र्विषयलोभश्च एते
१९ सर्व्वे उपस्थित्य तां कथां ग्रसन्ति ततः सा विफला भवति त एव उप्तबीज-
२० सकण्टकभूमिस्वरूपाः। एवं ये जना वाक्यं श्रुत्वा गृह्णन्ति तेषां कस्य
वा त्रिंशद्गुणानि कस्य वा षष्टिगुणानि कस्य वा शतगुणानि फलानि
भवन्ति तएव उप्तबीजोर्व्वरभूमिस्वरूपाः।

२१ तदा सोऽपरमपि कथितवान् कोपि जनो दीपाधारं परित्यज्य द्रोण-
स्याधः खट्वाया अधो वा स्थापयितुं दीपमानयति किं? अतो हेतो र्यन्न प्रका-
२२ शयिष्यते तादृक् किमपि लुक्कायितं वस्तु नास्ति। एवं यद् व्यक्तं न भवि-
२३ ष्यति तादृशं किमपि गुप्तं वस्तु नास्ति। यस्य श्रोतुं कर्णौ स्तः स शृणोतु।
२४ अपरमपि कथितवान् यूयं यद् यद् वाक्यं शृणुथ तत्र सावधाना
भवत यतो यूयं येन परिमाणेन परिमाथ तेनैव परिमाणेन युष्मदर्थमपि
२५ परिमास्यते; एवं मनोनिवेशिनो यूयं युष्मभ्यमधिकं दास्यते। यस्याश्रये
वर्द्धते तस्मै अपरमपि दास्यते किन्तु यस्याश्रये न वर्द्धते तस्य यत्
किञ्चिदस्ति तदपि तस्मान् नेष्यते।

२६ अनन्तरं स कथितवान् एको लोकः क्षेत्रे बीजान्युप्त्वा निद्राति; परन्तु
२७ दिवानिशं जाग्रत् तिष्ठन्नपि तद्बीजं येन प्रकारेणाङ्कुरयति तत् स न
२८ जानाति; यतोहेतोः प्रथमतः पत्राणि ततः परं कणिशानि तत्पश्चात्
२९ कणिशपूर्णानि शस्यानि भूमिः स्वयमुत्पादयति; किन्तु फलेषु पक्वेषु शस्य-
च्छेदनकालं ज्ञात्वा स तत्क्षणं शस्यानि छिनत्ति, अनेन तुल्यमीश्वर-
राज्यं।

३० पुनः सोकथयद् ईश्वरराज्यं केन समं केन वस्तुना सह वा तदुपमा-

स्वामि ? तत् सर्षपैकेन तुल्यं यतो मृदि वपनकाले सर्षपवीजं सर्व्वपृथि- ३१
वीस्थवीजात् क्षुद्रं किन्तु वपनात् परम् अङ्कुरयित्वा सर्व्वशाकाद् वृहद् ३२
भवति, एवं तस्य वृहत्यः शाखा जायन्ते ततस्तच्छायायां पक्षिण आश्रयन्ते।

इत्थं तेषां बोधानुरूपं सोऽनेकदृष्टान्तैस्तानुपदिष्टवान् दृष्टान्तं विना ३३
कामपि कथां तेभ्यो न कथितवान् पश्चात् निर्जने स शिष्यान् सर्व्वदृष्टा- ३४
न्तार्थं बोधितवान्।

एवं तद्दिनस्य सन्ध्यायां स तेभ्योऽकथयत् आगच्छत वयं पारं याम। तदा ३५
ते लोकान् विसृज्य तमविलम्बं गृहीत्वा नौकया प्रतस्थिरे; अपरा अपि- ३६
नावस्तया सह स्थिताः। ततः परं महाझञ्भ्शागमात् नौर्दोलायमाना तरङ्गेण ३७
जलैः पूर्णाभवच्च। तदा स नौकापश्चाद्भागे उपधाने शिरो निधाय नि- ३८
द्रित आसीत् ततस्ते तं जागरयित्वा जगदुः, हे प्रभो, अस्माकं प्राणा यान्ति
किमत्र भवतश्चिन्ता नास्ति ? तदा स उत्थाय वायुं तर्जितवान् समुद्र- ३९
ञ्चोक्तवान् शान्तः सुस्थिरश्च भव ततो वायौ निवृत्तेऽब्धिर्निस्तरङ्गोऽभूत्।
तदा स तानुवाच यूयं कुत एतादृक्शङ्काकुला भवत ? किं वो विश्वासो ४०
नास्ति? तस्मात्तेऽतीवभीताः परस्परं वक्तुमारेभिरे, अहो वायुः सिन्धु- ४१
श्चास्य निदेशग्राहिणौ कीदृगयं मनुजः !

---

५ पञ्चमोऽध्यायः।

१ अनेकभूतग्रस्तारोग्यकरणं २१ अध्यापककन्यारोग्यकरणार्थगमनं २५ प्रदर-रोग्यारोग्यकरणं ३५ अध्यापककन्यायै जीवनदानञ्च।

अथ ते सिन्धुपारं गत्वा गिदेरीयप्रदेश उपतस्थुः। नौकातो निर्गत- १
मात्राद् अपवित्रभूतग्रस्त एकः श्मशानादेत्य तं साक्षाच् चकार। स श्मशाने- २
ऽवात्सीत् कोपि तं शृङ्खलेन बद्ध्वा स्थापयितुं नाशक्नोत्। जनै र्वारं वारं ३
निगडेन शृङ्खलेन च स बद्धोपि शृङ्खलमाकृष्य मोचितवान् निगडञ्च ४
भंक्त्वा खण्डं खण्डं कृतवान् कोपि तं वशीकर्त्तुं न शशाक। दिवानिशं सदा ५
पर्व्वतं श्मशानञ्च भ्रमित्वा चीत्शब्दं कृतवान् ग्रावभिश्च स्वयं स्वं कृन्तवान्। स ६
यीशुं दूरात् पश्यन्नेव धावन् तं प्रणनाम। एवमुच्चैरुवन् उवाच हे सर्व्वोपरिस्थ ७

ईश्वरपुत्र यीशो भवता सह मे कः सम्बन्धः? अहं त्वामीश्वरेण शापये मां मा
८ यातय। यतो यीशुस्तं कथितवान् रे अपवित्रभूत, अस्मान्नु र्वहिर्निर्गच्छ।
९ अथ स तं पृष्टवान् किन्ते नाम? तेन प्रत्युक्तं वयमनेके ऽस्मस्ततोऽस्मन्नाम
१० वाहिनी। ततोऽस्मान् देशान्न प्रेषयेति ते तं प्रार्थयन्त। तदानीं पर्व्वतं
११ निकषा वृहन् वराहव्रजश्चरन्नासीत्। तस्माद् भूता विनयेन जगदुः, अमुं
१२ वराहव्रजम् आश्रयितुम् अस्मान् प्रहिणु। यीशुनानुज्ञातास्तेऽपवित्रभूता
१३ वहिर्निर्याय वराहव्रजं प्राविशन् ततः सर्व्वे वराहा वस्तुतस्तु प्रायोद्विसहस्र
१४ संख्यकाः कटकेन महाजवाद् धावन्तः सिन्धौ प्राणान् जहुः। तस्माद्
१५ वराहपालकाः पलायमानाः पुरे ग्रामे च तद्वार्त्तां कथयाञ्चक्रुः। तदा
लोका घटितं तत्कार्य्यं द्रष्टुं वहिर्जग्मुः, एवं यीशोः सन्निधिं गत्वा
तं भूतग्रस्तं, अर्थाद् वाहिनीभूतग्रस्तं नरं सवस्त्रं सचेतनं समुपविष्टञ्च दृष्ट्वा
१६ बिभ्युः। ततो दृष्टतत्कार्य्यलोकास्तस्य भूतग्रस्तनरस्य वराहव्रजस्यापि तां
१७ घटनां वर्णयामासुः। ततस्ते स्वसीमातो यातुं यीशुं विनेतुमारेभिरे। अथ
१८ तस्य नौकारोहणकाले स भूतमुक्तो ना यीशुना सह स्थातुं प्रार्थयत; किन्तु
१९ स तमननुमत्य कथितवान् त्वं निजात्मीयानां समीपं गृहञ्च गच्छ एवं
२० प्रभुस्त्वयि कृपां कृत्वा यानि कर्म्माणि कृतवान् तानि तान् ज्ञापय। अतः स
प्रस्थाय दिकापलिदेशे यीशुना कृतं तत्सर्व्वाश्चर्य्यं कर्म्म प्रचारयितुं प्रार-
ब्धवान् ततः सर्व्वे लोका आश्चर्य्यं मेनिरे।

२१　अनन्तरं यीशौ नावा पुनरन्यपार उत्तीर्णे सिन्धुतटे च तिष्ठति सति
२२ तत्समीपे बहुलोकानां समागमोऽभूत्। अपरं यायीर् नाम्ना कस्यापि
भजनगृहस्याधिप आगत्य तं दृष्ट्वैव चरणयोः पतित्वा बहु निवेद्य कथित-
२३ वान्; मम कन्या मृतप्रायाभूद् अतोभवानेत्य तदारोग्याय तस्या गात्रे हस्तम्
२४ अर्पयतु तेनैव सा जीविष्यति। तदा यीशुस्तेन सह चलितः किन्तु तत्प-
श्चाद् बहुलोकाश्चलित्वा तद्गात्रे पतिताः।

२५　अथ द्वादशवर्षाणि प्रदररोगेण शीर्णा चिकित्सकानां नानाचिकि-
२६ त्साभिश्च दुःखं भुक्तवती च सर्व्वस्वं व्ययित्वापि नारोग्यं प्राप्ता च पुनरपि

पीडितासीच या स्त्री सा यीशोर्वार्त्तां प्राप्य मनसाकथयत् यद्यहं तस्य २७
वस्त्रमात्रं स्प्रष्टुं लभेय तदा रोगहीना भविष्यामि। अतोहेतोः सा लोका- २८
रण्यमध्ये तत्पश्चादागत्य तस्य वस्त्रं पस्पर्श। तेनैव तत्क्षणं तस्या रक्तस्रोतः २९
शुष्कं एवं स्वयं तस्माद् रोगान्मुक्ता इत्यपि देहेऽनुभूता। अथ स्वस्मात् ३०
शक्ति र्निर्गता यीशुरेतन्मनसा ज्ञात्वा लोकनिवहं प्रति मुखं व्यावृत्य पृष्ट-
वान् केन मद्वस्त्रं स्पृष्टं? ततस्तस्य शिष्या ऊचुः भवतो वपुषि लोकाः संघर्ष- ३१
न्ति तद् दृष्ट्वा केन मद्वस्त्रं स्पृष्टमिति कुतः कथयति? किन्तु केन तत्कर्म्म ३२
कृतं तद् द्रष्टुं यीशुश्चतुर्दिशो दृष्टवान्। ततः सा स्त्री भीता कम्पिता च ३३
सती स्वस्या रुक्प्रतिक्रिया जातेति ज्ञात्वागत्य तत्सम्मुखे पतित्वा सर्व्व-
वृत्तान्तं सत्यं तस्मै कथयामास। तदानीं यीशुस्तां गदितवान् हे कन्ये तव ३४
प्रतीतिस्त्वाम् अरोगामकरोत् त्वं क्षेमेण व्रज स्वरोगान्मुक्ता च तिष्ठ।

इतिवाक्यवदनकाले भजनगृहाधिपस्य निवेशनाल् लोका एत्याधिपं ३५
बभाषिरे तव कन्या मृता तस्माद् गुरुं पुनः कुतः क्लिश्नासि? किन्तु यीशु- ३६
स्तद् वाक्यं श्रुत्वैव भजनगृहाधिपं गदितवान् मा भैषीः केवलं विश्वसिहि।
अथ पितरो याकुब् तद्भ्राता योहन् च एतान् विना कमपि स्वपश्चाद् ३७
यातुं नादिष्टवान्। तस्य भजनगृहाधिपस्य निवेशनसमीपम् आगत्य ३८
कलहं बहुरोदनं विलापञ्च कुर्व्वतो लोकान् ददर्श। तस्मान् ३९
निवेशनं प्रविश्य प्रोक्तवान् यूयं कुत इत्थं कलहं रोदनञ्च कुरुथ? कन्या
न मृता निद्राति। तस्मात्ते तमुपजहसुः किन्तु यीशुः सर्व्वान् वहिष्कृत्य ४०
कन्यायाः पितरौ स्वसङ्गिनश्च गृहीत्वा यत्र कन्यासीत् तत्स्थानं प्रवि-
ष्टवान्। अथ स तस्याः कन्याया हस्तौ धृत्वा तां बभाषे टालीथा कूमी, ४१
अर्थतो हे कन्ये, अहमाज्ञापयामि, त्वमुत्तिष्ठ। तेनैव तत्क्षणं सा द्वादश- ४२
वर्षवयस्का कन्या प्रोत्थाय चलितुमारेभे; इतः सर्व्वे महाविस्मयं गताः।
तत एतस्मै किञ्चित् खाद्यं दत्तेति कथयित्वा एतत्कर्म्म कमपि न ज्ञाप- ४३
यतेति दृढमादिष्टवान्।

## ६ षष्ठोऽध्यायः।

यीशुस्यावज्ञानं ७ शिष्येभ्यः शक्तिदानं १४ योहन्मज्जकस्य वधः ३० यीशुस्य विजनगमनम् ३५ पञ्चपूपद्विमत्स्यैः पञ्चसहस्रलोकभोजनम् ४५ सिन्धौपद्भ्यां गमनं ५२ बहुलोकारोग्यकरणञ्च।

१ अनन्तरं स तत्स्थानात् प्रस्थाय स्वप्रदेशमागतः शिष्यास्च तत्पश्चाद्
२ गताः। अथ विश्रामवारे सति स भजनगृहे उपदेष्टुमारब्धवान् ततो-
नेके लोकास्तत्कथां श्रुत्वा विस्मित्य जगदुः, अस्य मनुजस्य ईदृशी आश्चर्य-
क्रिया कस्माज् जाता? तथा स्वकराभ्याम् इत्यमद्भुतं कर्म्म कर्त्तुम् एतस्मै
३ कथं ज्ञानं दत्तम्? किमयं मरियमः पुत्रस्ताक्षा नो? एवं किमयं याकुब्-
योसि यिहूदा शिमोनां भ्राता नो? एवम् अस्य भगिन्यः किमिहास्माभिःसह
४ नो? इत्थं ते तदर्थे प्रत्यूहं गताः। तदा यीशुस्तेभ्योकथयत् स्वदेशं स्वकुटु-
५ म्बान् स्वपरिजनांस्च विना कुत्रापि भविष्यद्वादी असत्कृतो न भवति। अप-
रञ्च तेषामप्रत्ययात् स विस्मितः एवं कियतां रोगिणां वपुःषु हस्तम् अर्प-
यित्वा केवलं तेषामारोग्यकरणाद् अन्यत् किमपि चित्रकार्य्यं कर्त्तुं न शक्तः।

६ अथ स चतुर्दिक्स्थग्रामान् भ्रमित्वा उपदिष्टवान्। एवं द्वादशशिष्यान
७ आहूय अमेध्यभूतान वशीकर्त्तुं शक्तिं दत्त्वा तेषां द्वौ द्वौ जनौ प्रेषितवान्।
८ पुनरित्यादिशद् यूयम् एकैकां यष्टिं विना वस्त्रसम्पुटः पूपः कटिबन्धे ताम्र-
९ खण्डञ्च एषां किमपि मा गृह्णीत। मार्गयात्रायै पादेषूपानहौ दत्त्वा द्वे
१० उत्तरीये मा परिधत्त। अपरमप्युक्तं तेन यूयं यस्यां पुर्य्यां यस्य निवेशनं
११ प्रवेक्ष्यथ तां पुरीं यावन्न त्यक्ष्यथ तावत् तन्निवेशने स्थास्यथ। तत्र यदि केपि
युष्माकमातिथ्यं न विदधति युष्माकं कथास्च न शृण्वन्ति तर्हि तत्स्थानात्
प्रस्थानसमये तेषां विरुद्धं साक्ष्यं दातुं स्वपादानास्फाल्य रजः सम्पातयत;
अहं युष्मान् यथार्थं वच्मि विचारदिने तन्नगरस्यावस्थातः सिदोम्
१२ अमोरा नगरयोरवस्था सह्यतरा भविष्यति। अथ ते गत्वा लोकानां
१३ मनःपरावर्त्तनीः कथाः प्रचारितवन्तः। एवमनेकान् भूतांस्च त्याजित-
वन्तस्तथा तैलेन मर्द्दयित्वा बहून् जनानरोगानकार्षुः।

१४ इत्थं तस्य सुख्यातिस्चतुर्दिशो व्याप्ता तदा हेरोद् राजा तन्निशम्य

कथितवान् योहन् मज्जकः श्मशानाद् उत्थित अतोहेतोस्तेन सर्व्वा एता अद्भुतक्रियाः प्रकाश्यन्ते। एवम् अन्येऽकथयन् अयम् एलियः केपि केपि १५ कथितवन्त एष भविष्यद्वादी यद्वा भविष्यद्वादिनां सदृश एकोयम्। किन्तु १६ हेरोद् इत्याकर्ण्य भाषितवान् यस्याहं शिरश्छिन्नवान् सएव योहनयं स श्मशानादुदतिष्ठत्। पूर्व्वं स्वभ्रातुः फिलिपस्य पत्न्या उद्वाहं चिकीर्षुं हेरोदं १७ योहनकथयत् स्वभ्रातृवधू र्न विवाह्या। अतः कारणात् हेरोद् लोकं प्रहित्य १८ योहनं धृत्वा बन्धनालये बद्धवान्। एवं हेरोदिया तस्मै योहने प्रकुप्य तं १९ हन्तुम् ऐच्छत् किन्तु न शक्ता यस्माद् हेरोद् तं धार्म्मिकं सत्पुरुषञ्च ज्ञात्वा सम्मन्य रक्षितवान्; एवं तत्कथां श्रुत्वा तदनुसारेण बहूनि कर्म्माणि कृत- २० वान् हृष्टमनास्तदुपदेशं श्रुतवांश्च। किन्तु हेरोद् यदा स्वजन्मदिने प्रधान- २१ लोकेभ्यः सेनानीभ्यश्च गालील्प्रदेशीयश्रेष्ठलोकेभ्यश्च रात्रौ भोज्यमेकं कृतवान् तस्मिन् शुभदिने हेरोदियायाः कन्या समेत्य तेषां समक्षं संनृत्य २२ हेरोदस्तेन सहोपविष्टानाञ्च तोषमजीजनत् ततो नृपः कन्यामाह स्म मत्तो यद् याचसे तदेव तुभ्यं दास्ये। एवं शपथं कृत्वाकथयत् चेद् राज्यार्द्धमपि २३ याचसे तदपि तुभ्यं दास्ये। ततः सा बहिर्गत्वा स्वमातरं पप्रच्छ किमहं २४ याचिष्ये तदा साकथयत् योहनो मज्जकस्य शिरः। अथ तूर्णं भूपसमीपम् २५ एत्य याचमानावदत् क्षणेस्मिन् योहनो मज्जकस्य शिरः पात्रे निधाय देहि, एतद् याचेऽहं। तस्मात् भूपोऽतिदुःखितः, तथापि स्वशपथस्य सहभो- २६ जिनाञ्चानुरोधात् तदनङ्गीकर्त्तुं न शक्तः। तत्क्षणं राजा घातकं प्रेष्य तस्य २७ शिर आनेतुमादिष्टवान्। ततः स कारागारं गत्वा तच्छिरश्छित्वा पात्रे २८ निधायानीय तस्यै कन्यायै दत्तवान् कन्या च स्वमात्रे ददौ। अनन्तरं २९ योहनः शिष्यास्तद्वार्त्तां प्राप्यागत्य तस्य कुणपं श्मशानेऽस्थापयन्।

अथ प्रेषिता यीशोः सन्निधौ मिलिता एवं यद् यच् चक्रुः शिक्षया- ३० मासुश्च तत्सर्व्ववार्त्तास्तस्मै कथितवन्तः। स तानुवाच यूयं विजनस्थानं गत्वा ३१ विश्राम्यत यतस्तत्सन्निधौ बहुलोकानां समागमात् ते भोक्तुं नावकाशं प्राप्ताः। ततस्ते नावा विजनस्थानं गुप्तं जग्मुः। ततो लोकनिवहस्तेषां ३२

३३ स्थानान्तरयानं ददर्श, एवमनेके तं परिचित्य नानापुरेभ्यः पदैर्व्रजित्वा
३४ जवेन तेषामग्रे यीशोः समीपउपतस्थुः। तदा यीशु र्नावो बहिर्गत्य लोका-
रण्यानीं दृष्ट्वा तेषु करुणां कृतवान् यतस्तेऽरक्षकमेषा इवासन् तदा स तान्
नानाप्रसङ्गान् उपदिष्टवान्।

३५ अथ दिवान्ते सति शिष्या एत्य यीशुमूचिरे, इदं विजनस्थानं दिवा
३६ चावसन्नं। लोकानां किमपि खाद्यं नास्ति, अतश्चतुर्दिक्षु ग्रामान् गन्तुं
३७ भोज्यद्रव्याणि क्रेतुञ्च तान् विसृजतु भवान्। तदा स तानुवाच यूयमेव
३८ तान् भोजयत; ततस्ते जगदु र्वयं गत्वा द्विशतसंख्यकै र्मुद्रापादैः पूपान्
३९ क्रीत्वा किं तान् भोजयिष्यामः। तदा स तान् पृष्टवान् युष्माकं सन्निधौ
कति पूपा आसते? गत्वा पश्यत ततस्ते दृष्ट्वा तमवदन् पञ्च पूपा द्वौ मत्-
४० स्यौ च सन्ति। तदा स लोकान् शस्योपरि पंक्तिभिरुपवेशयितुम् आदिष्ट-
वान्, ततस्ते शतं शतं जनाः पञ्चाशत् पञ्चाशज्जनाश्च पंक्तिभि र्भुवि समुप-
४१ विविशुः। अथ स तान् पञ्चपूपान् मत्स्यद्वयञ्च धृत्वा स्वर्गं पश्यन् ईश्वर-
गुणान् अन्वकीर्त्तयद् एवं तान् पूपान् भंक्त्वा लोकेभ्यः परिवेषयितुं शिष्येभ्यो
४२ दत्तवान् द्वौ मत्स्यौ च सर्व्वेभ्यो विबभाज। ततः सर्व्वे भुक्त्वातृप्यन्।
४३ अनन्तरं शिष्या अवशिष्टैः पूपै र्मत्स्यैश्च पूर्णान् द्वादश डल्लकान् जगृहुः।
४४ एते भोक्तारः प्रायः पञ्च सहस्राणि पुरुषा आसन्।

४५ अथ स लोकान् विसृजन्नेव नावमारोढुं स्वस्मादग्रे पारे बैत्सैदापुरं
४६ यातुञ्च शिष्यान् वाढमादिष्टवान्। एवं सर्व्वान् विसृज्य स प्रार्थयितुं पर्व्वतं
४७ गतः। ततः सन्ध्यायां सत्यां नौः सिन्धुमध्य उपस्थिता किन्तु स स्थले
४८ एकाकी स्थितः। अथ सम्मुखवातवहनात् शिष्या नावं वाहयित्वा परि-
श्रान्ता इति ज्ञात्वा स निशाचतुर्थयामे सिन्धूपरि पद्भ्यां व्रजन् तेषां
४९ समीपमेत्य तेषामग्रे यातुम् उद्यतः। किन्तु शिष्याः सिन्धूपरि तं व्रजन्तं
५० दृष्ट्वा भूतमनुमाय रुरुवुः, यतः सर्व्वे तं दृष्ट्वा व्याकुलिताः। अतएव यीशु-
५१ स्तत्क्षणं तैः सहालप्य कथितवान् सुस्थिरा भवत, अयमहं मा भैष्ट। अथ
नौकामारुह्य तस्मिन् तेषां सन्निधिं गते वातो निवृत्तः; तस्मात्ते मनःसु

विस्मिता आश्चर्य्यं मेनिरे च। यतस्ते मनसां काठिन्यात् तत्पूपीयम आश्चर्य्यं कर्म्म न विविक्तवन्तः। ५२

अथ ते पारं गत्वा गिनिसिरित् प्रदेशमेत्य तट उपस्थिताः। एवं तेषु ५३ नौकातो बहिर्गतेषु तत्प्रदेशीया लोकास्तं परिचित्य चतुर्दिक्षु धावन्तो यत्र ५४ यत्र रोगिणो नरा आसन् तान् सर्व्वान् खट्टोपरि निधाय यत्र कुत्रचित् तद्वार्त्तां प्रापुः, तत् स्थानम् आनेतुम् आरेभिरे। तथा यत्र यत्र ग्रामे यत्र यत्र ५५ पुरे यत्र यत्र पल्ल्याञ्च तेन प्रवेशः कृतस्तद्वर्त्ममध्ये लोकाः पीडितान् स्थापयित्वा तस्य चेलग्रन्थिमात्रं स्प्रष्टुम् तेषामर्थे तदनुज्ञां प्रार्थयन्त; यावन्तो लोकाः पस्पृशुस्तावन्त एव गदान्मुक्ताः।

७ सप्तमोऽध्यायः।

१ अप्रक्षालितहस्तैर्भोजनकथा १४ मनुष्याशुचिकरणकारणनिर्णयः १४ सुरफैनिकीयस्त्रियाः कन्यारोग्यकरणं ३१ बधिरकद्वदनरारोग्यकरणञ्च।

अनन्तरं यिरूशालम आगताः फिरूशोध्यापकाश्च यीशोः समीपम् आगताः। ते तस्य कियतः शिष्यान् अशुचिकरैः, अर्थाद् अप्रक्षालितहस्तैर्भुञ्जतो दृष्ट्वा तानदूषयन्। यतः फिरूशिनः सर्व्वयिहूदीयाश्च प्राचां परम्परागतवाक्यं सम्मन्य प्रतलेन हस्तान् अप्रक्षाल्य न भुञ्जते। एवम् आपनादागत्य मज्जनं विना न खादन्ति तथा पानपात्रस्य जलपात्रस्य पित्तलपात्रस्यासनस्य च जले मज्जनं इत्यादीन् यानाचारान् आचरितुं ते गृह्णन्ति तथान्येपि बहवस्तेषामाचाराः सन्ति। ते फिरूशोऽध्यापकाश्च यीशुं पप्रच्छुः, तव शिष्याः प्राचां परम्परागतवाक्यानुसारेण नाचरित्वा अप्रक्षालितकरैः कुतो भुञ्जते? ततः स प्रत्युवाच कपटिनो युष्मान् उद्दिश्य यिशायियभविष्यद्वादी युक्तमवादीत्। यथा १ २ ३ ४ ५ ६ ७

‘एते लोकाः स्वकीयोष्ठैः संमन्यन्ते तु मां किल।
किन्तु मत्तो विदूरे हि सन्ति तेषां मनांसि वै।
शिक्षयित्वा विधीन् आज्ञा भजन्ते ते वृथैव मां।’

यूयं जलपात्रपानपात्रादीनि मज्जयित्वा मनुजपरम्परागतवाक्यं ८ रक्षथ किन्तु ईश्वराज्ञां लङ्घध्वे अपरा ईदृशोनेकाः क्रियाअपि कुरुध्वे।

९ अन्यथाकथयत् यूयं स्वपरम्परागतवाक्यस्य रक्षार्थं स्पष्टरूपेण ईश्वराज्ञां
१० लोपयथ। यतो मूसाद्वारा प्रोक्तमस्ति स्वपितरौ सम्मन्यध्वं यस्तु मातरं पितरं
११ वा दुर्वाक्यं वक्ति स नितान्तं म्रियतां। किन्तु मदीयेन येन द्रव्येण
तवोपकारोभवत् तन्निवेदितम् अर्थाद् ईश्वराय दत्तम् इदं वाक्यं यदि
१२ कोपि पितरं मातरं वा वक्ति तर्हि यूयं मातुः पितु र्वोपकारं कर्त्तुं तं वार-
१३ यथ। इत्थं स्वप्रचारितपरम्परागतवाक्येन यूयं ईश्वराज्ञां मुधा विधद्ध्वे,
ईदृशान्यन्यान्यनेकानि कर्म्माणि कुरुध्वे।

१४ अथ स लोकानाहूय बभाषे यूयं सर्व्वे मद्वाक्यं शृणुत बुध्यध्वञ्च।
१५ बाह्यादन्तरं प्रविश्य नरममेध्यं कर्त्तुं शक्नोति ईदृशं किमपि वस्तु नास्ति
१६ वरम् अन्तराद् बहिर्गतं यद्वस्तु तन्मनुजम् अमेध्यं करोति। यस्य श्रोतुं
१७ श्रोत्रे स्तः स शृणोतु। ततः स लोकान् हित्वा गृहमध्यं प्रविष्टस्तदा शिष्या-
१८ स्तदृष्टान्तवाक्यार्थं पप्रच्छुः। तस्मात् स तान् जगाद यूयमपि किमेतादृग-
बोधाः? किमपि द्रव्यं बाह्यादन्तरं प्रविश्य नरममेध्यं कर्त्तुं न शक्नोति कथा-
१९ मिमां किं न बुध्यध्वे? तत् तदन्त र्न प्रविशति किन्तु कुक्षिमध्यं प्रविशति
२० शेषे सर्व्वभुक्तवस्तुग्राहिणि बहिर्देशे निर्याति। अपरमप्यवादीद् यन्नरा
२१ न्निरेति तदेव नरममेध्यं करोति। यतोन्तराद् अर्थान् मानवानां मनोभ्यः
२२ कुचिन्ता परस्त्रीवेश्यागमनं नरबधश्चौर्य्यं लोभो दुष्टता प्रवञ्चना कामुकता
२३ कुदृष्टिरीश्वरनिन्दा गर्व्वस्तम इत्यादयो निर्गच्छन्ति। एते सर्व्वेऽन्तरा-
देत्य नरममेध्यं कुर्व्वन्ति।

२४ अथ स उत्थाय तत्स्थानात् सोरसीदोन् पुरप्रदेशं जगाम तत्र किमपि
निवेशनं प्रविश्य सर्व्वैरज्ञातः स्थातुं मतिञ्चक्रे किन्तु गुप्तः स्थातुं न शशाक।
२५ यतः सुरफैनिकीदेशीययूनानीवंशोद्भवस्त्रियाः कन्या भूतग्रस्तासीत्।
२६ सा स्त्री तद्वार्त्तां प्राप्य तत्समीपमागत्य तच्चरणयोः पतित्वा स्वकन्यातो
२७ भूतं निराकर्त्तुं तस्मिन् विनयं कृतवती। किन्तु यीशुस्तामवदत् प्रथमं
बालकास्तृप्यन्तु यतो बालकानां खाद्यं गृहीत्वा कुक्कुरेभ्यो निक्षेपोऽनुचितः।
२८ तदा सा स्त्री तमवादीत् भोः प्रभो तत् सत्यं तथापि मञ्चाधःस्थाः

कुक्कुराः बालानामतिरिक्तपूपान् खादन्ति। ततः सोऽकथयद् एतत् कथा- २९
हेतोः सकुशला याहि तव कन्यां त्यक्त्वा भूतो गतः। अथ सा स्त्री गृहं ३०
गत्वा कन्यां भूतत्यक्तां शय्यास्थितां ददर्श।

पुनश्च स सोरसीदोन् पुरप्रदेशाभ्यां प्रस्थाय दिकापलिदेशस्य प्रान्तर- ३१
भागेन गालील्जलधेः समीपं गतवान्। तदा लोकैरेकं बधिरं कद्वदञ्च ३२
नरं तन्निकटमानीय तस्य गात्रे हस्तमर्पयितुं विनयः कृतः। ततो यीशुः ३३
लोकारण्यात् तं निर्जनमानीय तस्य कर्णयोरङ्गुली ददौ निष्ठीवं दत्त्वा च
तज्जिह्वां पस्पर्श। अनन्तरं स्वर्गं निरीक्ष्य दीर्घं निश्वस्य च तमवदत् इत्- ३४
फतः अर्थात् मुक्तोभूयात्। ततस्तत्क्षणं तस्य कर्णौ मुक्तौ जिह्वायाश्च ३५
जाड्यापगमात् स सुस्पष्टवाक्यमकथयत्। अथ स तान् वाढमित्यादिदेश ३६
यूयमिमां कथां कस्मैचिदपि मा कथयत किन्तु स यति न्यषेधत् ते तति
बाहुल्येन प्राचारयन्; एवं तेऽतिचमत्कृत्य परस्परं कथयामासुः स बधिराय ३७
श्रवणशक्तिं मूकाय च कथनशक्तिं दत्त्वा सर्व्वं कर्म्मोत्तमरूपेण चकार।

---

८ अष्टमोऽध्यायः।

१ सप्तपूपकियन्मत्स्यैश्चतुःसहस्रपुरुष भोजनं १० गगनीयचिह्नं दर्शयितुम् अनङ्गीकारः १४ शिष्याकूपकिण्वकथा २२ अन्धाय नेत्रदानं २७ ख्रीष्टनिर्णयः ३१ ख्रीष्टस्य स्वमृत्युभोगीयभविष्यद्वाक्यं। ३४ अनुगामिलोकान् प्रत्युपदेशः ३९ भविष्यद्वाक्यञ्च।

अपरञ्च तदा तत्समीपं बहवो लोका आयाताः एवं तेषां भोज्यद्रव्याभावाद् १
यीशुः शिष्यानाहूय जगाद, लोकनिवहे मम कृपा जायते ते दिनत्रयं २
मया सार्द्धं सन्ति तेषां भोज्यं किमपि नास्ति, एवं तेषां मध्येऽनेके दूराद् ३
आगताः, अभुक्तेषु तेषु मया स्वगृहमभिप्रहितेषु ते पथि क्लमिष्यन्ति।
शिष्या अवादिषुः, एतावतो लोकान् तर्पयितुम् अत्र प्रान्तरे के पूपान् प्राप्तुं ४
शक्नुवन्ति? ततः स तान् पप्रच्छ युष्माकं कति पूपाः सन्ति? तेऽकथयन् ५
सप्त। ततः स ताल्लोकान् भुवि समुपवेष्टुम् आदिश्य तान् सप्त पूपान् धृत्वा ६
ईश्वरगुणान् अनुकीर्त्तयामास, एवं भङ्क्त्वा परिवेषयितुं शिष्यान् प्रति ददौ
ततस्ते लोकेभ्यः परिवेषयामासुः। तथा तेषां समीपे ये क्षुद्रमत्स्या आसन् ७

८ तानप्यादाय ईश्वरगुणान् संकीर्त्य परिवेषयितुम् आदिष्टवान्। ततो लोका
९ भुक्त्वा तृप्तिं गता एवं अवशिष्टखाद्यैः पूर्णाः सप्त डल्लका गृहीताः। एते
भोक्तारः प्रायश्चतुः सहस्रपुरुषा आसन् ततः स तान् विससर्ज।

१०　अथ स शिष्यैः सह नावमारुह्य दल्मानूथासीमामागतः। ततः परं
११ फिरूशिन आगत्य तेन सह विवदमानाः परीक्षार्थं तमाकाशीयचिह्नं द्रष्टुं
१२ याचितवन्तः। तदाऽसोऽन्तर्दीर्घं निश्वस्याकथयत् एते विद्यमाना नराः
कुतश्चिह्नं मृगयन्ते? युष्मानहं यथार्थं ब्रवीमि लोकानेतान् किमपि चिह्नं
१३ न दर्शयिष्यते। अथ तान् हित्वा पुन र्नावम् आरुह्य पारमगात्।

१४　एतर्हि शिष्यैः पूपेषु विस्मृतेषु नावि तेषां सन्निधौ पूप एकएव स्थितः।
१५ तदानीं यीशुस्तान् आदिष्टवान् फिरूशीनां हेरोदश्च किण्वं प्रति सतर्काः
१६ सावधानाश्च भवत। ततस्तेऽन्योन्यं विवेचनं कर्त्तुम् आरेभिरे, अस्माकं
१७ सन्निधौ पूपो नास्तीति हेतोरिमां कथां कथयति। तद् बुद्ध्वा यीशुस्तेभ्यो-
१८ ऽकथयत् युष्माकं स्थाने पूपाभावात् कुत इत्थं वितर्कयथ। यूयं किमद्यापि
किमपि न जानीथ? बोद्धुञ्च न शक्नुथ यावदद्य किं युष्माकं मनांसि कठि-
नानि सन्ति? सत्सु नेत्रेषु किं न पश्यथ? सत्सु कर्णेषु किं न शृणुथ? न स्मरथ
१९ च? यदाहं पञ्च पूपान् पञ्चसहस्राणां पुरुषाणां मध्ये भंक्त्वा दत्तवान् तदानीं
यूयम् अवशिष्टपूपैः पूर्णान् कतिडल्लकान् गृहीतवन्तः? तेऽकथयन्
२० द्वादशडल्लकान्। अपरञ्च यदा चतुः सहस्राणां पुरुषाणां मध्ये पूपान् भंक्त्वा
दत्तां तदा युष्माभिरतिरिक्तपूपानां कतिडल्लकान् गृहीतवन्तः? ते कथया-
२१ मासुः सप्तडल्लकान्। तदा स कथितवान् तर्हि यूयम् अधुनापि कुतो बोद्धुं
न शक्नुथ?

२२　अनन्तरं तस्मिन् वैत्सैदानगर उपस्थिते सति लोका अन्धमेकं नरं
२३ तत्समीपमानीय तं स्प्रष्टुं तं प्रार्थयाञ्चक्रिरे। तदा तस्यान्धस्य करौ गृही-
त्वा नगराद् वहिर्देशं नीतवान्; अथ तन्नेत्रे निष्ठीवं दत्त्वा तद्गात्रे च हस्ताव्
२४ अर्पयित्वा तं पप्रच्छ किमपि पश्यसि? तदा स नेत्रे उन्मील्य जगाद वृक्षवन्
२५ मनुजान् गच्छतो निरीक्षे। ततो यीशुः पुनस्तस्य नयनयो र्हस्तावर्पयित्वा

तस्य नेत्रे उन्मीलयामास; तस्मात् स स्वस्थो भूत्वा स्पष्टरूपं सर्व्वलोकान् ददर्श। ततः परं त्वं ग्रामम् मा गच्छ ग्रामस्थं कमपि च किमप्यनुक्त्वा निज- २६ गृहं याहि कथामेतां कथयित्वा यीशुस्तं निजगृहं प्रति प्रहितवान्।

अनन्तरं शिष्यैः सहितो यीशुः कैसरीयाफिलिपिपुरं जगाम २७ एवं पथि गच्छन् तानपृच्छत् कोऽहम् अत्र लोकाः किं वदन्ति? ते प्रत्यूचुः त्वां योहन् मज्जकं वदन्ति किन्तु केपि केपि एलियं वदन्ति; अपरे केपि केपि भविष्यद्वादिनाम् एकोजन इति वदन्ति। अथ स २८ तानपृच्छत् किन्तु कोऽहम् इत्यत्र यूयं किं वदथ? तदा पितरः प्रत्यवदत् २९ भवान् अभिषिक्तस्त्राता। ततः स तान् गाढमादिशद् यूयं मम कथां ३० कस्मैचिदपि मा कथयत।

मनुष्यपुत्रेणावश्यं बहवो यातना भोक्तव्या एवं प्राचीनलोकैः प्रधान- ३१ याजकैरध्यापकैश्च स निन्दितः सन् हतो भविष्यति तृतीयदिने उत्था- स्यति च, यीशुः शिष्यानुपदेष्टुमारभ्य कथामिमां स्पष्टमाचष्ट। तस्मात् ३२ पितरस्तस्य हस्तौ धृत्वा तं तर्जितवान्। किन्तु स मुखं परावर्त्य शिष्य- ३३ गणं निरीक्ष्य पितरं तर्जयित्वावादीद् दूरी भव विघ्नकारिन् ईश्वरीय- कार्य्यादपि मनुष्यकार्य्यं तुभ्यं रोचते तरां।

अथ स लोकान् शिष्यांश्चाहूय जगाद यः कश्चिन् मामनुगन्तुम् ३४ इच्छति स आत्मानं दाम्यतु, एवं स्वक्रुशं गृहीत्वा मत्पश्चाद् आयातु। यतो यः कश्चित् स्वप्राणं रक्षितुमिच्छति स तं हारयिष्यति किन्तु यः ३५ कश्चिन् मदर्थं सुसंवादार्थञ्च प्राणं हारयति स तं रक्षिष्यति। अपरञ्च ३६ मनुजः सर्व्वं जगत् प्राप्य यदि स्वप्राणं हारयति तर्हि तस्य को लाभः? एवं नरः स्वप्राणविनिमयेन किं दातुं शक्नोति? एतेषां व्यभिचारिणां पापि- ३७ नाञ्च लोकानां साक्षाद् यदि कोपि मां मत्कथां वा लज्जास्पदं जानाति तर्हि यदा मनुजपुत्रो धर्म्मदूतैः सह पितुः प्रभावेनागमिष्यति तदा सोपि ३८ तं लज्जास्पदं ज्ञास्यति।

अथ स तानवादीत् युष्मभ्यमहं यथार्थं कथयामि ईश्वरराज्यं पराक्रमे- ३९

णोपस्थितं न दृष्ट्वा मृत्युं नास्वादिष्यते, अत्र दण्डायमानानां मध्येपि तादृशा लोकाः सन्ति।

---

९ नवमोऽध्यायः।

१ खीष्टस्यान्यमूर्त्तिधारणम् एलियर्निर्णयः १४ एकमूकबधिरभूतग्रस्तस्य स्वास्थ्यकरणं ३० स्वमृत्योः श्मशानोत्थानस्य च कथा ३२ श्रेष्ठत्वनिर्णयः ३८ खीष्टस्य नानोपदेशश्च।

१ अथ षड्दिनेभ्यः परं यीशुः पितरं याकुबं योहनञ्च संगृहीत्वा गिरे-
२ रुच्चस्य निर्जनस्थानं गत्वा तेषां प्रत्यक्षे मूर्त्त्यन्तरं दधार। ततस्तस्य परिधेयं
३ ईदृशं उज्ज्वलहिमपाण्डरं जातं यद् जगति कोपि रजको न तादृक्-
४ पाण्डरं कर्त्तुं शक्नोति। अपरञ्च एलियो मूसा च तेभ्यो दर्शनं दत्वा यीशुना
५ सह कथनं कर्त्तुमारेभाते। तदा पितरो यीशुमवादीद् हे गुरोऽस्माकमत्र स्थितिरुत्तमा ततएव वयं त्वत्कृते एका मूसाकृते एका एलियकृते चैका
६ एतास्तिस्रः कुटीर्निर्म्माम। किन्तु स यदुक्तवान् तत् स्वयं न बुबुधे यतः सर्व्वे
७ विभयाञ्चक्रुः। एतर्हि पयोदस्तान् छादयामास, एवं ममायं प्रियःपुत्त्रः कथा-
८ यामस्य मनांसि निधत्तेति नभोवाणी तन्मेघान्निर्ययौ। अथ हठात्ते
९ चतुर्दिशो दृष्ट्वा यीशुं विना स्वैः सहितं कमपि न ददृशुः। ततः परं गिरेरवरोहणकाले स तान् गाढम् इत्यादिदेश यावन्नरसूनोः श्मशानादुत्थानं न भवति तावत् दर्शनस्यास्य वार्त्ता युष्माभिः कस्मैचिदपि
१० न वक्तव्या। तदा श्मशानादुत्थानस्य कोभिप्राय इति विचार्य्य ते तद्वाक्यं
११ स्वेषु गोपायाञ्चक्रिरे। अथ ते यीशुं पप्रच्छुः प्रथमत एलियेनागन्तव्यम्
१२ इति वाक्यं कुत उपाध्याया आहुः? तदा स प्रत्युवाच एलियः प्रथममेत्य सर्व्वकार्य्याणि परिपाटीं करिष्यति तथा नरपुत्त्रस्यार्थे लिपि र्यथास्ते तथैव
१३ सोपि बहुदुःखं प्राप्य अवज्ञास्यते। किन्त्वहं युष्मान् वदामि, एलियार्थे लिपि र्यथास्ते तथैव स एत्य ययौ, एवं लोकाः स्वेच्छानुरूपं तमभि व्यवहरन्ति स्म।

१४ अनन्तरं स शिष्यसमीपमेत्य तेषां चतुःपार्श्वे तैः सह बहुजनान् विवद-
१५ मानाध्यापकांश्च दृष्टवान् किन्तु सर्व्वलोकास्तं दृष्ट्वैव चमत्कृत्य तद्

आसन्नं धावन्तस्तं प्रणेमुः। तदा यीशुरध्यापकानप्राक्षीद् एतैः सह यूयं किं १६
विवदध्वे? ततो लोकानां कश्चिदेकः प्रत्यवादीत् हे गुरो मम सूनुं मूकं भूत- १७
धृतञ्च भवदासन्नम् आनयं। यदा यदासौ भूतस्तमाक्रमते तदैव पात- १८
यति तथा स फेणायते, एवं दन्तैर्दन्तान् घर्षति क्षीणो भवति च ततो
हेतोस्तं भूतं त्याजयितुं भवच्छिष्यान् निकषा निवेदितवान् ते न शेकुः।
तदा स तमवादीत् रे अविश्वासिनः सन्ताना युष्माभिः सह कति १९
कालानहं स्थास्यामि? अपरान् कति कालान् वा व आचारान् सहिष्ये?
तं मदासन्नमानयत। ततस्तत्सन्निधिं स आनीयत किन्तु तं दृष्ट्वैव २०
भूतो बालकं धृतवान् स भूमौ पतित्वा फेणायमानो लुलोठ।
तदा स तत्पितरं पप्रच्छ, अस्येदृशी दशा कति दिनानि भूता? ततः २१
सोवादीत् बाल्यकालात्। एनं नाशयितुं भूतोयं बहुवारान् वह्नौ जले च २२
न्यक्षिपत् किन्तु यदि भवान् किमपि कर्त्तुं शक्नोति तर्हि दयां कृत्वास्मान्
उपकरोतु। तदा यीशुस्तमवदत् यदि प्रत्येतुं शक्नोषि तर्हि प्रत्ययिने २३
जनाय सर्व्वं साध्यम्। ततस्तत्क्षणं तद्बालकस्य पिता प्रोच्चै रुवन् साश्रु २४
नेत्रः प्रोवाच प्रभो प्रत्येमि ममाप्रत्ययं प्रतिकुरु। अथ यीशु र्लोकसङ्घं २५
धावित्वा यान्तं दृष्ट्वा तमपूतभूतं तर्जयित्वा जगाद रे बधिर मूकभूत
त्वमेतस्माद् वहिर्भव पुनः कदापि माश्रयैनं त्वामहम् इत्यादिशामि। तदा २६
स भूतश्चीत् शब्दं कृत्वा तमापीड्य वहिर्जगाम ततो बालको मृतकल्पो
बभूव तस्मादयं मृतइत्यनेके कथयामासुः। किन्तु करौ धृत्वा यीशुना- २७
त्थापितः स उत्तस्थौ। अथ यीशौ गृहं प्रविष्टे शिष्या गुप्तं तं पप्रच्छुः २८
वयमेनं भूतं त्याजयितुं कुतो न शक्ताः? स उवाच प्रार्थनोपवासौ विना २९
केनाप्यन्येन कर्म्मणा भूतमीदृशं त्याजयितुं न शक्यं।

अनन्तरं स तत्स्थानादित्वा गालील्मध्येन ययौ किन्तु तत् कोपि ३०
जानीयादिति स नैच्छत्। अपरञ्च स शिष्यानुपदिशन् बभाषे नरपुत्रो ३१
नरहस्तेषु समर्पयिष्यते ते च तं हनिष्यन्ति तैस्तस्मिन् हते तृतीयदिने स ३२
उत्थास्यतीति। किन्तु तत्कथां ते नाबुध्यन्त प्रष्टुञ्च बिभ्युः।

३३ अथ यीशुः कफर्नाहूम्पुरमागत्य मध्येगृहञ्चेत्य तानपृच्छद् वर्त्म-
३४ मध्ये यूयमन्योन्यं किं विवदध्वे स्म? किन्तु ते निरुत्तरास्तस्थु र्यस्मात्तेषां
३५ कः श्रेष्ठ इति वर्त्मनि तेऽन्योन्यं व्यवदन्त। ततः स उपविश्य द्वादशशिष्यान्
आहूय बभाषे यः कश्चित् प्रधानो भवितुमिच्छति स सर्व्वेभ्यः क्षुद्रः सर्व्वे-
३६ षां सेवकश्च भवतु। तदा स बालकमेकं गृहीत्वा मध्ये समुपावेशयत् ततस्तं
३७ क्रोडे कृत्वा तानवादीत् यः कश्चिदीदृशः कस्यापि बालस्यातिथ्यं
करोति स ममातिथ्यं करोति यः कश्चिन्ममातिथ्यं करोति स केवलम्
ममातिथ्यं करोति तन्न मत्प्रेरकस्याप्यातिथ्यं करोति।

३८ अथ योहन् तमब्रवीत् हे गुरो, अस्माकमननुगामिनम् एकं त्वन्नाम्ना
भूतान् त्याजयन्तं वयं दृष्टवन्त, एवमस्माकमपश्चाद्गामित्वात् तं न्यषेधाम
किन्तु यीशुरवदत् तं मा निषेधत यतो यः कश्चिन् मन्नाम्ना चित्रं कर्म्म
३९ करोति स सहसा मां निन्दितुं न शक्नोति। तथा यः कश्चिद् युष्माकं
४० विपक्षतां न करोति स युष्माकमेव सपक्षः। एवं यः कश्चिद् युष्मान् ख्रीष्ट-
४१ शिष्यान् ज्ञात्वा मन्नाम्ना कंसैकेन पानीयं पातुं ददाति युष्मानहं यथार्थं
४२ वच्मि स फलेन वञ्चितो न भविष्यति। किन्तु यदि कश्चिन् मयि
विश्वासिनामेषां क्षुद्रप्राणिनां कस्यापि विघ्नं जनयति तर्हि तस्यैतत्कर्म्म
४३ करणात् कण्ठे पेषणीं बद्ध्वा सिन्धौ निक्षेपणं कुशलं। अतः स्वकरौ यदि त्वां
४४ बाधेते तर्हि तौ छिन्धि यतः करद्वयवान् भूत्वा यत्र कीटा न म्रियन्ते
वह्निश्च न निर्व्वाति तस्मिन् नरके ऽनिर्व्वाणानलगमनात् करहीनस्य
४५ स्वर्गे प्रवेशस्तव क्षेमं। तथा तव पादौ यदि विघ्नं जनयतस्तर्हि तौ छिन्धि
४६ यतो द्विपादवतस्तव यत्र कीटा न म्रियन्ते वह्निश्च न निर्व्वाति तस्मिन्
४७ नरके ऽनिर्व्वाणवह्नौ निक्षेपात् पादहीनस्य स्वर्गप्रवेशस्तव क्षेमं। एवं स्वनेत्रं
४८ यदि त्वां बाधते तर्हि तदप्युत्पाटय यतो द्विनेत्रस्य तव यत्र कीटा न
म्रियन्ते वह्निश्च न निर्व्वाति तस्मिन्नरकेऽनिर्व्वाणवह्नौ निक्षेपाद् एकनेत्र-
४९ वत ईश्वरराज्ये प्रवेशस्तव क्षेमं। यथा सर्व्वो बलि र्लवणाक्तः क्रियते तथा
५० सर्व्वोजनो वह्निरूपेण लवणेन लवणाक्तः कारिष्यते। लवणं भद्रं

किन्तु यदि लवणे स्वादुता न तिष्ठति तर्हि कथम् आस्वादयुक्तं करि-
ष्यथ? यूयं लवणयुक्ता भवत परस्परं प्रेम च कुरुत।

---

१० दशमोऽध्यायः।

१ स्त्रीत्यागकथा १३ शिशूनां ग्राह्यत्वं १७ धनियुवलोकायोपदेशः २८ शिष्याणां सत्कारनिर्णयः ३२ ख्रीष्टस्वमृत्योर्भविष्यद्वाक्यं ३५ याकुब्योहनोः प्रार्थनस्याग्राह्यत्वं ४६ अन्धायचक्षुर्दानञ्च।

अनन्तरं स तत्स्थानात् प्रस्थाय यर्द्दन्नद्याः पारे यिहूदाप्रदेश उप- १
स्थितवान् तत्र तदन्तिके लोकानां समागमे जाते स निजरीत्यनुसारेण पुन-
स्तान् उपदिदेश। तदा फिरूशिनस्तत्समीपम् एत्य परीक्षामुदिश्य तं पप्रच्छुः २
स्वजाया मनुजानां त्याज्या न वेति? ततः स प्रत्यवादीद् अत्र कार्य्ये मूसा ३
युष्मान् प्रति किमाज्ञापयत्? तऊचुः त्यागपत्रं दत्त्वा स्वपत्नीं त्यक्तुं शक्नोति ४
स इत्यनुमतिं लिलेख। तदा यीशुः प्रत्युवाच युष्माकं मनसां काठिन्या- ५
द्धेतो र्मूसा निदेशमिमम् अलिखत्। किन्तु सृष्टेरादौ ईश्वरो नरान् पुंरू- ६
पेण स्त्रीरूपेण च ससर्ज। 'ततः कारणात् पुमान् पितरं मातरञ्च त्यक्त्वा ७
स्वजायायाम् आसक्तिं करिष्यति। तौ द्वाव् एकाङ्गौ भविष्यतः; तस्मात् ८
तत्कालमारभ्य तौ न द्वाव् एकाङ्गौ। अतः कारणाद् ईश्वरो यमयोजयत् ९
कोपि नरा तं न वियोजयेत्। अथ यीशु र्गृहं प्रविष्टस्तदा शिष्याः पुन- १०
स्तत्कथां तं पप्रच्छुः। ततः सोवदत् कश्चिद् यदि स्वभार्य्यां त्यक्त्वान्याम् ११
उद्वहति तर्हि स स्वभार्य्यायाः प्रातिकूल्येन व्यभिचारी भवति। एवं १२
काचिन्नारी यदि स्वपतिं हित्वान्यपुंसा विवाहिता भवति तर्हि सापि
व्यभिचारिणी भवति।

अथ शिशूनां स्पर्शार्थं लोकैस्तदन्तिकं शिशव आनीयन्त किन्तु १३
शिष्यास्तानानीतवतस्तर्जयामासुः। यीशुस्तद् दृष्ट्वा क्रुध्यन् जगाद मन्नि- १४
कटम् आगन्तुं शिशून् मा वारयत यत एतादृशा ईश्वरराज्याधिका-
रिणः। युष्मानहं यथार्थं वच्मि यः कश्चित् शिशुवद् भूत्वा राज्यमीश्व- १५
रस्य न गृह्लीयात् स कदापि तद्राज्यं प्रवेष्टुं न शक्नोति। अनन्तरं स १६
शिशूनङ्के निधाय तेषां गात्रेषु हस्तौ दत्त्वाशिषं बभाषे।

१७　अथ स वर्त्मना याति, एतर्हि जन एको धावन् आगत्य तत्सम्मुखे जानुनी पातयित्वा पृष्टवान् भोः परमगुरो, अनन्तायुः प्राप्तये मया किं कर्त्तव्यं ?
१८ तदा यीशुरुवाच मां परमं कुतो वदसि विनेश्वरं कोपि परमो न
१९ भवति। परस्त्रीं नाभिगच्छ नरं मा घातय स्तेयं मा कुरु मृषासाक्ष्यं मा
२० देहि हिंसाञ्च मा कुरु पितरौ सम्मन्यस्व निदेशा एते त्वया ज्ञाताः। तत-
२१ स्तेन प्रत्युक्तं हे गुरो बाल्यकालादहं सर्व्वानेतान् आचरामि। तदा यीशुस्तं विलोक्य स्नेहेन बभाषे तवैकस्याभाव आस्ते त्वं गत्वा सर्व्वस्वं विक्रीय दरिद्रेभ्यो विश्राणय ततः स्वर्गे धनं प्राप्स्यसि ततः परम् एत्य क्रुशमुत्थाप्य मद-
२२ नुवर्त्ती भव। किन्तु तस्य बहुविभवविद्यमानत्वात् स इमां कथामाकर्ण्य
२३ विषणो दुःखितश्च सन् जगाम। अथ यीशुश्चतुर्दिशो निरीक्ष्य शिष्यान्
२४ अवादीत् धनिलोकानाम् ईश्वरराज्यप्रवेशः कीदृग्दुष्करः। तस्य कथातः शिष्याश्चमच्चक्रुः किन्तु स पुनरवदद् हे बालका ये धने विश्वसन्ति तेषाम्
२५ ईश्वरराज्यप्रवेशः कीदृग्दुष्करः। ईश्वरराज्ये धनिनां प्रवेशात् सूचि-
२६ रन्ध्रेण महाङ्गस्य गमनागमने सुकरे। तदा शिष्या अतीव विस्मिताः पर-
२७ स्परं प्रोचुः, तर्हि कः परित्राणं प्राप्तुं शक्नोति ? ततो यीशुस्तान् विलोक्य बभाषे तन् नरस्यासाध्यं किन्तु नेश्वरस्य यतो हेतोरीश्वरस्य सर्व्वं साध्यम्।

२८　तदा पितर उवाच पश्य वयं सर्व्वं परित्यज्य भवतोनुगामिनो जाताः।
२९ ततो यीशुः प्रत्यवदद् युष्मानहं यथार्थं वदामि मदर्थं सुसंवादार्थं वा यो जनः सदनं भ्रातरं भगिनीं पितरं मातरं जायां सन्तानान् भूमिं वा
३० त्यक्त्वा गृहभ्रातृभगिनीपितृमातृपत्नीसन्तानभूमीनामिह शतगुणान् प्रेत्या-
३१ नन्तायुश्च न प्राप्नोति तादृशः कोपि नास्ति। किन्त्वग्रीया अनेके लोकाः शेषाः शेषीया अनेके लोकाश्चाग्रा भविष्यन्ति।

३२　अथ यिरूशालमयानकाले यीशुस्तेषाम् अग्रगामी बभूव तस्मात्ते
३३ चित्रं ज्ञात्वा पश्चाद्गामिनो भूत्वा बिभ्युः। तदा स पुन र्द्वादशशिष्यान् गृहीत्वा स्वीयं यद्यद् घटिष्यते तत्तत् तेभ्यः कथयितुं प्रारेभे ; पश्यत वयं

यिरूशालम् पुरं यामः, तत्र मनुष्यपुत्त्रः प्रधानयाजकानाम् उपाध्यायानाञ्च करेषु समर्पयिष्यते; ते च बधदण्डाज्ञां दापयित्वा परदेशीयानां करेषु तं समर्पयिष्यन्ति। एवं ते तमुपहस्य कशया प्रहृत्य च तद्वपुषि निष्ठीवञ्च ३४ निक्षिप्य हनिष्यन्ति ततः स तृतीयदिने प्रोत्थास्यति।

ततः सिवदेः पुत्रौ याकुब् योहनौ तदन्तिकम् एत्य प्रोचतुः हे गुरो यद्- ३५ आवाभ्यां याचिष्यते तदस्मदर्थं भवान् करोतु निवेदनमिदमावयोः। ततः स ३६ कथितवान् युवां किमिच्छथः किं मया युष्मदर्थं करणीयं। तदा तौ प्रोचतुः, ३७ आवयोरेकं दक्षिणपार्श्वे वामपार्श्वे चैकं तवैश्वर्य्यपदे समुपवेष्टुम् आज्ञापय। किन्तु यीशुः प्रत्युवाच युवामज्ञात्वा प्रार्थयेथे इदं, येन कंसेनाहं पिवा- ३८ मि तेन युवाभ्यां किं पातुं शक्यते? एवं यस्मिन् दुःखरूपजलेऽहं मज्जयिष्ये तन्मज्जने किं युवां शक्यथः? तौ प्रत्यूचतुः शक्यावः आवाम्। तदा यीशु- ३९ रवदत् येन कंसेनाहं पास्यामि तेनावश्यं युवामपि पास्यथः, एवं येनाहं मज्जयिष्ये तत्र युवामपि मज्जयिष्येथे; किन्तु येषामर्थं मम दक्षिणवाम- ४० योरासने स्थापिते तान् विनान्यं कमपि तत्रोपवेशयितुं ममाधिकारो नास्ति। अथान्यदशशिष्या इमां कथां श्रुत्वा याकुब् योहन्भ्यां चुकुपुः; ४१ किन्तु यीशुस्तान् समाहूय बभाषे, अन्यदेशीयानाम् उपरि ये ४२ राजत्वं कुर्व्वन्ति ते तेषामेव प्रभुत्वं कुर्व्वन्ति तथा ये महालोकास्ते तेषाम् अधिपतित्वं कुर्व्वन्तीति यूयं जानीथ। किन्तु युष्माकं मध्ये न तथा भवि- ४३ ष्यति युष्माकं मध्ये यः प्राधान्यं वाञ्छति स युष्माकं सेवको भविष्यति, एवं ४४ युष्माकं यो महान् भवितुमिच्छति स सर्व्वेषां किङ्करो भविष्यति। यतो ४५ मनुष्यपुत्त्रः सेव्यो भवितुं नागत्य सेवां कर्त्तुं तथानेकेषां परित्राणस्य मूल्य- रूपस्वप्राणं दातुञ्चागतः।

अथ ते यिरीहोनगरोपस्थितास्ततस्तस्मात् शिष्यैर्लोकैश्च सह यीशो ४६ र्गमनकाले टीमयस्य पुत्त्रो बर्टीमयनामा अन्धस्तन्मार्गपार्श्वे भिक्षार्थम् उपविष्टः। स नासिरीयस्य यीशोरागमनवार्त्तां प्राप्य प्रोच्चै र्वक्तुमारेभे ४७ हे यीशो दायूदः सन्तान मां दयस्व। ततोनेके लोका भौनी- ४८

भवेति तं तर्जयामासुः, किन्तु स पुनरधिकमुच्चै र्जगाद हे यीशो दायूदः
४९ सन्तान मां दयस्व। तदा यीशुः स्थित्वा तमाह्वातुं समादिदेश ततो
लोकास्तमन्धमाहूय बभाषिरे हे नर स्थिरो भव उत्तिष्ठ स त्वामाह्व-
५० यति। तदा स उत्तरीयवस्त्रं निक्षिप्य प्रोत्थाय यीशोः समीपं गतः।
५१ ततो यीशुस्तमवदत् त्वया किं प्रार्थ्यते? तुभ्यमहं किं करिष्यामि? तदा
५२ सोन्धस्तमुवाच हे गुरो मदीया दृष्टि र्भवेत्। ततो यीशुस्तमुवाच याहि
तव विश्वासस्त्वां स्वस्थमकार्षीत् तस्मात् तत्क्षणं स दृष्टिं प्राप्य पथा यीशोः
पश्चात् ययौ।

---

## ११ एकादशोऽध्यायः।

१ ख्रीष्टस्य यिरूशालम्प्रवेशन १२ उडुम्बरतरोः शापः १५ मन्दिराद् वणिजां बहिष्कृतिः २० प्रत्ययस्य प्राबल्यकथनं २७ प्रधानयाजकादीनां निरुत्तरताकरणञ्च।

१ अनन्तरं तेषु यिरूशालम् समीपस्थयो र्बैत्फगी बैथनीय पुरयोरन्ति
कस्थं जैतुननामाद्रिमागतेषु यीशुः प्रेषणकाले द्वौ शिष्याविदं वाक्यं
२ जगाद, युवाममुं सम्मुखस्थं ग्रामं यातं तत्र प्रविश्य यो नरं नावहत् तं गर्द्दभ-
३ शावकं द्रक्ष्यथस्तं मोचयित्वानयतं। किन्तु युवां कर्म्मेदं कुतः कुरुथः?
कथामिमां यदि कोपि पृच्छति तर्हि प्रभोरत्र प्रयोजनमस्तीति कथिते
४ स शीघ्रं तमत्र प्रेषयिष्यति। ततस्तौ गत्वा द्विमार्गमेलने कस्यचिद् द्वारस्य
५ पार्श्वे तं गर्द्दभशावकं प्राप्य मोचयतः। एतर्हि तत्रोपस्थितलोकानां कश्चिद्
६ अपृच्छत् गर्द्दभशिशुं कुतो मोचयथः? तदा यीशोराज्ञानुसारेण ताभ्यां
७ प्रत्युदिते तत्क्षणं तमादातुं तेऽनुजज्ञुः। अथ तौ यीशोः सन्निधिं गर्द्दभशिशुम्
आनीय तदुपरि स्ववस्त्राणि पातयामासतुः; ततः स तदुपरि समुपविष्टः।
८ एवमनेके पथि स्ववासांसि पातयामासुः परैश्च तरुशाखाश्छित्वा मार्गे
९ विकीर्णाः। अपरञ्च पश्चाद्गामिनोऽग्रगामिनश्च सर्व्वे जना उच्चैःस्वरेण वक्तुमा-
१० रेभिरे जय जय यः परमेश्वरस्य नाम्नागच्छति स धन्य इति। तथा-
स्माकं पूर्व्वपुरुषस्य दायूदो यद्राज्यं परमेश्वरनाम्नायाति तदपि धन्यं
११ सर्व्वस्मादुच्छ्राये स्वर्गे तस्य जयो भवेत्। इत्थं यीशु र्यिरूशालमि मन्दिरं

प्रविश्य चतुर्दिक्स्थानां सर्व्वेषां वस्तूनामुपरि दृष्टिं पातयामास; अथ सायं काल उपस्थिते द्वादशशिष्यसहितो वैथनियां जगाम।

अपरेहनि वैथनियात् आगमनसमये क्षुधार्त्तो बभूव। ततो दूरे १२ सपत्रमुडुम्बरपादपं विलोक्य तत्र किञ्चित् फलं प्राप्तुं तस्य सन्निकृष्टं ययौ तदानीं फलपातनस्य समयो नागच्छति। ततस्तत्रोपस्थितः १३ पत्राणि विना किमप्यपरं न प्राप्य स कथितवान्, अद्यारभ्य कोपि मानवस्त्वदीयानि फलानि न भुञ्जीत; इमां कथां तस्य शिष्याश्च शुश्रुवुः। १४

तदनन्तरं तेषु यिरूशालममायातेषु यीशु र्मन्दिरमध्यं गत्वा तत्र- १५ स्थानां वणिजां मुद्रासनानि पारावतविक्रेतृणाम् आसनानि च न्युब्जयाञ्चकार सर्व्वान् क्रेतृन् विक्रेतृंश्च वहिष्कृतवान्। अपरं मन्दिरमध्येन किमपि १६ पात्रं वोढुं सर्व्वजनं निवारयामास। एवं लोकानुपदिशन् जगाद, एतत् १७ किं शास्त्रे लिखितं नास्ति? 'मम गृहं सर्व्वजातीयानां प्रार्थनागृहम् इति नाम्ना प्रथितं भविष्यति किन्तु यूयं तदेव चोराणां गह्वरं कुरुथ।' इमां १८ वाणीं श्रुत्वाध्यापकाः प्रधानयाजकाश्च तं यथा नाशयितुं शक्नुवन्ति तथोपायं मृगयामासुः किन्तु तस्योपदेशात् सर्व्वे लोका विस्मयं गता अतस्ते तस्माद् बिभ्युः। अथ सायंसमय उपस्थिते यीशुर्नगराद् वहि- १९ र्वव्राज।

अनन्तरं प्रातःकाले ते तेन मार्गेण गच्छन्तस्तमुडुम्बरमहीरुहं समूलं २० शुष्कं ददृशुः। ततः पितरः पूर्व्ववाक्यं स्मरन् यीशुं बभाषे हे गुरो २१ पश्यतु य उडुम्बरविटपी भवता शप्तः स शुष्को बभूव। ततो यीशुः २२ प्रत्यवादीद् यूयमीश्वरे विश्वसित; युष्मानहं यथार्थं वदामि कोपि यद्येतत् २३ गिरिं वदति त्वमुत्थाय गत्वा जलधौ पत, प्रोक्तमिदं वाक्यमवश्यं घटिष्यते मनसा किमपि न सन्दिह्य चेदिदं विश्वसेत् तर्हि तस्य वाक्यानुसारेण तद् घटिष्यते। अतो हेतोरहं युष्मान् वच्मि प्रार्थनकाले यद् २४ यदाकाङ्क्षध्वं तत्तदवश्यं प्राप्स्यथ, इत्थं विश्वसित ततः प्राप्स्यथ। अपरञ्च २५ प्रार्थयितुं समुत्थितेषु यदि कोपि युष्माकं विरुद्धम् अपराधी तिष्ठति तर्हि

तं क्षमध्वं तथा कृते युष्माकं स्वर्गस्थः पितापि युष्माकमागांसि क्षमिष्यते;
२६ किन्तु यदि न क्षमध्वे तर्हि वः स्वर्गस्थः पितापि युष्माकमागांसि न क्षमिष्यते।
२७ अनन्तरं ते पुन र्यिरूशालमं प्रविविशुः यीशु र्यदा मध्येमन्दिरम् इत-
स्ततो गच्छति तदानीं प्रधानयाजका उपाध्यायाः प्राञ्चश्च तदन्तिकमेत्य
२८ कथामिमां पप्रच्छुः, त्वं केनादेशेन कर्म्माण्येतानि करोषि तथैतानि कर्म्माणि
२९ कर्त्तुम् आदेशः केनादीयत? ततो यीशुः प्रतिगदितवान् अहमपि युष्मान्
एककथां पृच्छामि यदि यूयं तस्योत्तरं कुरुथ तर्हि कयाज्ञया कर्म्माण्ये-
३० तानि करोमि तद् युष्मभ्यं कथयिष्यामि। योहनो मज्जनम् ईश्वराद् जातं
३१ किं मानवात्? तन्मह्यं कथयत। ते परस्परं विवेक्तुं प्रारेभिरे तद् ईश्वराद् बभू-
३२ वेति चेद् वदामः, तर्हि कुतस्तं न प्रत्यैत कथामेतां कथयिष्यति। एवं मानवाद्
अभवदिति चेद् वदामः, तर्हि लोकेभ्यो भयमस्ति यतो हेतोः सर्व्वे योहनं
३३ सत्यं भविष्यद्वादिनं मन्यन्ते। अतएव ते यीशुं प्रत्यवादिषु र्वयं तद्वक्तुं न
शक्नुमः। यीशुरुवाच तर्हि येनादेशेन कर्म्माण्येतानि करोमि तमपि युष्मभ्यं
न कथयिष्यामि।

---

१२ द्वादशोऽध्यायः।

१ द्राक्षाक्षेत्रस्य दृष्टान्तः १३ करे फिरूशीनां निरुत्तरताकरणं १८ श्मशानोत्थाने सिदूकीनां निरुत्तरताकरणं २८ प्रधानाज्ञायानिर्णयः ३५ अध्यापकानां निरुत्तरताकरणं ३८ तेषां दोषप्रकटनं ४१ विधवाया दातृत्वञ्च।

१ अनन्तरं यीशु र्दृष्टान्तेन तेभ्यः कथयितुमारेभे कश्चिदेको द्राक्षाक्षेत्रं
विधाय तच्चतुर्दिक्षु वारणीं कृत्वा तन्मध्ये द्राक्षापेषणयन्त्रं प्रास्थापयत् तथा
तस्य गडमपि निर्म्मितवान् ततस्तत्क्षेत्रं कृषीवलेषु समर्प्य दूरदेशं जगाम।
२ तदनन्तरं फलकाले कृषीवलेभ्यो द्राक्षाक्षेत्रफलानि प्राप्तुं तेषां सविधे भृत्यम्
३ एकं प्राहिणोत्; किन्तु कृषीवलास्तं धृत्वा प्रहृत्य रिक्तहस्तं विससर्जुः।
४ ततः स पुनरन्यमेकं भृत्यं प्रेषयामास किन्तु ते कृषीवलाः पाषाणाघातै-
५ स्तस्य शिरो भंक्त्वा सापमानं तं व्यसर्जन्। ततः परं सोपरं दासं प्राहिणोत्
तदा ते तं जघ्नुः, एवम् अनेकेषां कस्यचित् प्रहारः कस्यचिद् बधश्च तैः
६ कृतः। ततःपरं स्वपुत्रे प्रहिते मया ते तमवश्यं सम्मंस्यन्ते इत्युक्त्वावशेषे

तेषां सन्निधौ निजप्रियम् एकमात्रं पुत्रं प्रेषयामास। किन्तु कृषीवलाः ७ परस्परं जगदुः, एष उत्तराधिकारी, आगच्छत वयमेनं हन्मस्तथा-कृते ऽधिकारोयम् अस्माकं भविष्यति। ततस्तं धृत्वा हत्वा द्राक्षाक्षेत्राद् ८ बहिः प्राक्षिपन्। अनेनासौ द्राक्षाक्षेत्रपतिः किं करिष्यति? स एत्य तान् ९ कृषीवलान् संहत्य तत्क्षेत्रम् अन्येषु कृषीवलेषु समर्पयिष्यति। अपरञ्च १०

'स्थपतयः करिष्यन्ति ग्रावाणं यन्तु तुच्छकं।
प्रधानप्रस्तरः कोणे स एव तु भविष्यति।
एतत् कर्म्म परेशस्याद्भुतं नो दृष्टितो भवेत्'। ११

इमां शास्त्रीयां लिपिं यूयं किं नापाठिष्ट? तदानीं स तानुद्दिश्य तां १२ दृष्टान्तकथां कथितवान् त इत्थं बुद्ध्वा तं धर्त्तुमुद्यताः, किन्तु लोकेभ्यो बिभ्युः; तदनन्तरं ते तं विहाय वव्रजुः।

अपरञ्च ते तस्य वाक्यदोषं धर्त्तुं कतिपयान् फिरूशिनो हेरोदी- १३ यांश्च लोकान तदन्तिकं प्रेषयामासुः। त आगत्य तमवदन् हे गुरो भवान् १४ तथ्यभाषी कस्याप्यनुरोधं न मन्यते पक्षपातञ्च न करोति यथार्थत ईश्व-रीयं मार्गं दर्शयति वयमेतत् प्रजानीमः; कैसराय करो देयो न वा? वयं दास्यामो न वा? किन्तु स तेषां कपटं ज्ञात्वा जगाद कुतो मां परीक्षध्वे? १५ एकं मुद्रापादं समानीय मां दर्शय। तदा तैरेकस्मिन् मुद्रापादे समानीते १६ स तान् पप्रच्छ, अत्र लिखितं नाम मूर्त्तिर्वा कस्य? ते प्रत्यूचुः कैसरस्य। तदा यीशुरवदत् तर्हि कैसरस्य वित्तं कैसराय दत्त, ईश्वरस्य वित्तन्तु १७ ईश्वराय दत्त; ततस्ते विस्मयं मेनिरे।

अथ मृतानामुत्थानं ये न मन्यन्ते ते सिदूकिनो यीशोः समीपमागत्य तं १८ पप्रच्छुः; हे गुरो कश्चिज्जनो यदि निःसन्ततिः सन् भार्य्यायां सत्यां म्रियते १९ तर्हि तस्य भ्राता तस्य भार्य्यां गृहीत्वा भ्रातु र्वंशोत्पत्तिं करिष्यति व्यवस्था-मिमां मूसास्मान् प्रति व्यलिखत्। किन्तु केचित् सप्त भ्रातर आसन् तत- २० स्तेषां ज्येष्ठोभ्राता विवह्य निःसन्ततिः सन् अम्रियत। ततो द्वितीयो २१ भ्राता तां स्त्रियमग्रहीत् किन्तु सोपि निःसन्ततिः सन् अम्रियत; अथ

२२ तृतीयोपि भ्राता तादृशोभवत्। इत्थं सप्तैव भ्रातरः स्त्रियं तां गृहीत्वा
२३ निःसन्तानाः सन्तोऽम्रियन्त सर्व्वशेषे सापि स्त्री म्रियते स्म। अथ मृता-
नामुत्थानकाले यदा त उत्थास्यन्ति तदा तेषां कस्य भार्य्या सा भविष्यति?
२४ यतस्ते सप्तैव तां व्यवहन्। ततो यीशुः प्रत्युवाच शास्त्रम् ईश्वरशक्तिञ्च
२५ यूयमज्ञात्वा किमभ्राम्यत न? मृतलोकानामुत्थाने सति ते न विवहन्ति
२६ वाग्दत्ता अपि न भवन्ति किन्तु स्वर्गीयदूतानां सदृशा भवन्ति। पुनश्च
'अहम् इब्राहीम ईश्वर इस्हाक ईश्वरो याकुवश्चेश्वरः' यामिमां कथां
स्तम्बमध्ये तिष्ठन् ईश्वरो मुसामवादीत् मृतानामुत्थानार्थे सा कथा मुसा-
२७ लिखिते पुस्तके युष्माभि र्नापाठि किं? ईश्वरो जीवतां प्रभुः किन्तु मृता-
नां प्रभु र्न भवति तस्माद्धेतो यूयं महाभ्रमेण तिष्ठथ।

२८ एतर्हि एकोध्यापक एत्य तेषामित्थं विचारं शुश्राव; एवं यीशुस्तेषां
वाक्यस्य सदुत्तरं दत्तवान् इति बुद्ध्वा तं पृष्टवान् सर्व्वासाम् आज्ञानां का
२९ श्रेष्ठा? ततो यीशुः प्रत्युवाच, 'हे इस्रायेल्लोका अवधत्त, अस्माकं प्रभुः परमेश्वर
३० एक एव,सर्व्वान्तःकरणैः सर्व्वप्राणैः सर्व्वचित्तैः सर्व्वशक्तिभिश्च प्रभौ परमेश्वरे
३१ प्रीयध्वं' इत्याज्ञा श्रेष्ठा। तथा 'स्वप्रतिवासिनि स्ववत् प्रेम कुरुध्वं' एषा या
द्वितीयाज्ञा सा तादृशी; एताभ्यां द्वाभ्याम् आज्ञाभ्याम् अन्या काप्याज्ञा श्रेष्ठा
३२ नास्ति। तदा सोध्यापकस्तमवदत्, हे गुरो सत्यं भवान् यथार्थं प्रोक्तवान्
३३ यत एकस्माद् ईश्वराद् अन्यो द्वितीय ईश्वरो नास्ति; अपरं सर्व्वान्तःकरणैः
सर्व्वप्राणैः सर्व्वचित्तैः सर्व्वशक्तिभिश्च ईश्वरे प्रेमकरणं तथा स्वसमीपवासिनि
३४ स्ववत् प्रेमकरणञ्च सर्व्वेभ्यो होमबलिदानादिभ्यः श्रेष्ठं भवति। ततो यीशुः
सुबुद्धेरिव तस्येदम् उत्तरं श्रुत्वा तं भाषितवान् त्वमीश्वरस्य राज्यान्नदू-
रोसि। इतःपरं तेन सह कस्यापि वाक्यस्य विचारं कर्त्तुं कस्यापि साह-
सो न जातः।

३५ अनन्तरं मध्येमन्दिरं उपदिशन् यीशुरिमं प्रश्नं चकार, अध्यापका
३६ अभिषिक्तं (तारकं) कुतो दायूदः सन्तानं वदन्ति? यतो हेतोः स्वयं दायूद्
पवित्रस्यात्मन आवेशेन कथामिमां कथयामास। यथा

'मम प्रभुमिदं वाक्यमवदत् परमेश्वरः।
तव शत्रूनहं यावत् पादपीठं करोमि न।
तावत् कालं मदीये त्वं दक्षपार्श्व उपाविश।

यदि दायूद् तं प्रभुं वदति तर्हि कथं स तस्य सन्तानो भवितुमर्हति? ३७
पृथग्लोकास्तत्कथां श्रुत्वाननन्दुः।

तदानीं स तानुपदिश्य कथितवान् ये नरा दीर्घपरिधेयानि हट्टे ३८
विपणौ च लोककृतनमस्कारान् भजनगृहे प्रधानासनानि भोजनकाले ३९
प्रधानस्थानानि च काङ्क्षन्ते; एवं विधवायाः सर्व्वस्वं ग्रसित्वा छलाद् दीर्घ- ४०
कालं प्रार्थयन्ते तादृशेभ्य उपाध्यायेभ्यः सावधाना भवत; तेऽधिकतरान्
दण्डान् प्राप्स्यन्ति।

तदनन्तरं लोका भाण्डागारे मुद्रा यथा निक्षिपन्ति भाण्डा- ४१
गारस्य सम्मुखे समुपविश्य यीशुस्तदवलुलोक; तदानीं बहवो धनिनस्तस्य
मध्ये बहूनि धनानि निरक्षिपन्। पश्चाद् एका दरिद्रा विधवा ४२
समागत्य द्विपणमूल्यां मुद्रैकां तत्र निरक्षिपत्। तदा यीशुः शिष्यान् ४३
आहूय कथितवान् युष्मानहं यथार्थं वदामि ये ये भाण्डागारेऽस्मिन्
धनानि निःक्षिपन्ति स्म तेभ्यः सर्व्वेभ्य इयं विधवा दरिद्राधिकम् निःक्षि-
पति स्म। यतस्ते प्रभूतधनस्य किञ्चिद् निरक्षिपन् किन्तु दीनेयं स्वदिन- ४४
यापनयोग्यं किञ्चिदपि न स्थापयित्वा सर्व्वस्वं निरक्षिपत्।

---

१३ त्रयोदशोऽध्यायः।

१ मन्दिरविनाशशिष्यदुःखयो र्भविष्यद्वाक्यं १४ यिहूदीयानां दुःखकथनम् २१ मृषाभविष्यद्वादिकथनम् २४ यिहूदीयानां राज्यविनाशकथनम् २८ उडुम्बर-तरुदृष्टान्तः ३२ सावधानत्वस्यावश्यकत्वञ्च।

अनन्तरं मन्दिराद् वहिर्गमनकाले तस्य शिष्याणामेकस्तं व्याहृतवान् १
हे गुरो पश्यतु कीदृशाः पाषाणाः कीदृक् च निचयनं। तदा यीशुस्तम्- २
अवदत् त्वं किमेतद् वृहन्निचयनं पश्यसि? अस्यैकपाषाणोपीतरपाषाणो-
परि न स्थास्यति सर्व्वे ऽधःक्षेप्स्यन्ते। अथ यस्मिन् काले जैतुन- ३
गिरौ मन्दिरस्य सम्मुखे समुपविष्टस्तस्मिन् काले पितरो याकुव् योहन्

४ आन्द्रियश्चैते तं रहसि पप्रच्छुः। एता कदा घटनाः भविष्यन्ति तथैतत्सर्व्वासां
५ सिद्ध्युपक्रमस्य वा किं चिह्नं तदस्मभ्यं कथयतु भवान्। ततो यीशुस्तान्
वक्तुमारेभे कोपि यथा युष्मान् न भ्रामयति तथात्र यूयं सावधाना भवत।
६ यतः ख्रीष्टोहमिति कथयित्वा मम नाम्नानेके समागत्य लोकानां भ्रमं जन-
७ यिष्यन्ति; किन्तु यूयं रणस्य वार्त्तां रणाडम्बरञ्च श्रुत्वा मा व्याकुला भवत
८ घटना एता अवश्यम्भाविन्यः, किन्त्वापाते न शेषो भविष्यति। देशस्य
विपक्षतया देशो राज्यस्य विपक्षतया च राज्यमुत्थास्यति तथा स्थाने स्थाने
भूमिकम्पा दुर्भिक्षं महाक्लेशश्च समुपस्थास्यन्ति सर्व्व एते दुःखस्यारम्भाः।
९ किन्तु यूयम् आत्मार्थे सावधानास्तिष्ठत यतो लोकाः राजसभायां युष्मान्
समर्पयिष्यन्ति तथा भजनगृहे प्रहरिष्यन्ति; अपरं मदर्थे यूयं देशाधि-
१० पान् भूपांश्च प्रति साक्ष्यदानाय तेषां सम्मुखे उपस्थापयिष्यध्वे। एवं शेषी-
११ भवनात् पूर्व्वं सर्व्वान् देशीयान् प्रति सुसंवादः प्रचारयिष्यते। किन्तु
यदा ते युष्मान् धृत्वा समर्पयिष्यन्ति तदा यूयं यद्यद् उत्तरं दास्यथ तदग्रे
तस्य विवेचनं मा कुरुत तदर्थं किञ्चिदपि मा चिन्तयत च तदानीं
युष्माकं मनःसु यद्यद् वाक्यम् उपस्थापयिष्यते तदेव वदिष्यथ यतो यूयं
१२ न तद्वक्तारः किन्तु पवित्र आत्मा तस्य वक्ता। तदा भ्राता भ्रातरं पिता
पुत्रं घातनार्थं परहस्तेषु समर्पयिष्यते तथापत्यानि-मातापित्रो र्विपक्ष-
१३ तया तौ घातयिष्यन्ति। एवं मम नाम हेतोः सर्व्वेषां सविधे यूयं जुगुप्सिता
भविष्यथ किन्तु यः कश्चित् शेषपर्य्यन्तं धैर्य्यम् आलम्बिष्यते सएव परि-
त्रास्यते।

१४　दानियेलभविष्यद्वादिना प्रोक्तं सर्व्वनाशि जुगुप्सितञ्च वस्तु यदाऽ-
योग्यस्थाने विद्यमानं द्रक्षथ (यो जनः पठति स बुध्यतां) तदा ये यिहू-
१५ दीयदेशे तिष्ठन्ति ते महीध्रं प्रति पलायन्तां; तथा यो नरो गृहोपरि
तिष्ठति स गृहमध्यं नावरोहतु तथा किमपि वस्तु ग्रहीतुं मध्येगृहं न
१६ प्रविशतु; तथाच यो नरः क्षेत्रे तिष्ठति सोपि स्ववस्त्रं ग्रहीतुं परावृत्य
१७ न व्रजतु। तदानीं गर्भवतीनां स्तन्यदात्रीणाञ्च योषितां दुर्गति र्भविष्यति।

एवं युष्माकं पलायनं शीतकाले यथा न भवति तदर्थं प्रार्थयध्वं। यतस्तदा १८ यादृशी दुर्घटना घटिष्यते तादृशी दुर्घटना ईश्वरसृष्टेः प्रथममारभ्याद्य १९ यावत् कदापि न जाता न जनिष्यते च। अपरञ्च परमेश्वरो यदि तस्य २० समयस्य संक्षेपं न करोति तर्हि कस्यापि प्राणभृतो रक्षा भवितुं न शक्ष्यति किन्तु यान् जनान् मनोनीतान् अकरोत् तेषां स्वमनोनीतानां हेतोः स तदनेहसं संक्षेप्स्यति।

अन्यच्च पश्य ख्रीष्टोत्र स्थाने वा तत्र स्थाने विद्यते तस्मिन् काले यदि २१ कश्चिद् युष्मान् एतादृशं वाक्यं व्याहरति तर्हि तस्मिन् वाक्ये भैव विश्वसित। यतोनेके मिथ्याख्रीष्टा मिथ्याभविष्यद्वादिनश्च समुपस्थाय बहूनि २२ चिह्नान्यद्भुतानि कर्म्माणि च दर्शयिष्यन्ति तथा यदि सम्भवति तर्हि मनोनीतलोकानामपि मिथ्यामतिं जनयिष्यन्ति। पश्यत घटनातः पूर्व्वं २३ सर्व्वकार्य्यस्य वार्त्तां युष्मभ्यमदाम् यूयं सावधानास्तिष्ठत।

अपरञ्च तस्य क्लेशकालस्याव्यवहिते परकाले भास्करः सान्धकारो २४ भविष्यति तथैव चन्द्रश्चन्द्रिकां न दास्यति। एवं नभःस्थानि नक्षत्राणि २५ पतिष्यन्ति व्योममण्डलस्था ग्रहाश्च विचलिष्यन्ति। तदानीं महापराक्रमेण २६ महैश्वर्य्येण च मेघमारुह्य समायान्तं मानवसुतं मानवाः समीक्षिष्यन्ते। अन्यच्च स निजदूतान् प्रहित्य नभोभूम्योः सीमां यावद् जगतश्चतुर्दिग्भ्यः २७ स्वमनोनीतलोकान् संग्रहीष्यति।

उडुम्बरतरो र्दृष्टान्तं शिक्षध्वं यदोडुम्बरस्य तरो र्नवीनाः शाखा २८ जायन्ते पल्लवादीनि च निर्गच्छन्ति तदा निदाघकालः सविधो भवतीति यूयं ज्ञातुं शक्नुथ। तद्वद् एता घटना दृष्ट्वा स कालो द्वार्य्युपस्थित इति २९ जानीत। युष्मानहं यथार्थं वदामि, आधुनिकलोकानां गमनात् पूर्व्वं ३० तानि सर्व्वाणि घटिष्यन्ते। द्यावापृथिव्यो र्विचलितयोः सत्यो र्मदीया ३१ वाणी न विचलिष्यति।

अपरञ्च तातादन्यः कोपि स्वर्गस्थदूतगणो वा पुत्रो तं दिवसं ३२ तं दण्डं वा न ज्ञापयति। ततोहेतोः स समयः कदा भविष्यति एत- ३३

३४ अज्ञानाभावाद् यूयं सावधानास्तिष्ठत सतर्काश्च भूत्वा प्रार्थयध्वं; यथा कश्चित् पुमान् स्वनिवेशनाद् दूरदेशं प्रति यात्राकरणकाले दासेषु स्वका-
३५ र्य्यस्य भारमर्पयित्वा सर्व्वान् स्वे स्वे कर्म्मणि नियोजयति; तथा दौवारिकं
३६ जागरितुं समादिश्य याति तद्वन् नरपुत्रः। गृहपतिः सायंकाले निशीथे वा तृतीययामे वा प्रातःकाले वा कदागमिष्यति तद् यूयं न जानीथ; स हठादागत्य यथा युष्मान् निद्रितान् न पश्यति तदर्थं
३७ जागरितास्तिष्ठत। एवं युष्मानहं यद् वदामि तदेव सर्व्वान् वदामि जागरितास्तिष्ठतेति।

---

## १४ चतुर्दशोऽध्यायः।

१ खीष्टविरुद्धा कुमन्त्रणा ३ स्त्रिया सुगन्धितैलेन तदभिषेकः १० यिहूदाविश्वासघातित्वम् १२ निस्तारोत्सवे भोज्यासादनाय शिष्यप्रेषणम् १७ तैः सह भोजनम् २२ रात्रिभोज्यनिरूपणम् २७ पितरस्यानङ्गीकारे भविष्यद्वाक्यम् ३२ उद्याने खीष्टस्य चित्ताभितापः ४३ परैराक्रमणम् खीष्टस्य ५३ तस्य विचारोदण्डाज्ञा च ६६ पितरेणानङ्गीकरणञ्च।

१ अथ दिनद्वयात् परं निस्तारोत्सवे किण्वहीनपूपोत्सवे च समुपस्थिते प्रधानयाजका अध्यापकाश्च केनापि छलेन यीशुं धर्त्तुं हन्तुञ्च मृगया-
२ ञ्चक्रिरे। किन्तु लोकानां कलहभयादूचिरे नचोत्सवकाल उचितमेतदिति।

३ अनन्तरं बैथनियापुरे शिमोन् कुष्ठिनो गृहे यीशौ भोक्तुमुपविष्टे सति काचित् योषित् पाण्डरपाषाणस्य सम्पुटकेन महार्घोत्तमतैलम् आ-
४ नीय सम्पुटकं भञ्जयित्वा तस्योत्तमाङ्गे तैलधारां पातयाञ्चक्रे। तस्मात्
५ केचित् स्वान्ते कुप्यन्तः कथितवन्तः कुतोयं तैलापव्ययः? यद्येतत् तैलं व्यक्रेष्यत तर्हि मुद्रापादशतत्रयादप्यधिकं मूल्यं प्राप्य दरिद्रलोकेभ्यो दातुमश-
६ क्ष्यत, कथामेतां कथयित्वा तया योषिता साकं वाचायुध्यन्। किन्तु यीशुरुवाच कुत एतस्यै कृच्छ्रं ददासि मह्यमियं कर्म्मोत्तमं कृतवती।
७ दरिद्राः सर्व्वदा युष्माभिः सह तिष्ठन्ति तस्माद् यूयं यदेच्छथ तदैव
८ तानुपकर्त्तुं शक्नुथ किन्त्वहं युष्माभिः सह निरन्तरं न तिष्ठामि। अस्या यथासाध्यं तथैवाकरोदियं श्मशानयापनात् पूर्व्वं समेत्य मद्वपुषि तैलम् अमर्द्द-

यत्। अहं युष्मभ्यं यथार्थं कथयामि जगतां मध्ये यत्र यत्र सुसंवादोयं प्रचा- ९
रयिष्यते तत्र तत्र योषित एतस्याः स्मरणार्थं तत्कृत कर्म्मैतत् प्रचारयिष्यते।

ततः परं द्वादशानां शिष्याणामेक ईष्कारियोतीययिहूदाख्यो यीशुं १०
परकरेषु समर्पयितुं प्रधानयाजकानां समीपमियाय। ते तस्य वाक्यं समा- ११
कर्ण्य सन्तुष्टाः सन्तस्तस्मै मुद्रा दातुं प्रत्यजानत ; तस्मात् स तं तेषां करेषु
समर्पणायोपायं मृगयामास।

अनन्तरं किण्वशून्यपूपोत्सवस्य प्रथमेऽहनि निस्तारोत्सवार्थं मेष- १२
मारणसमये शिष्यास्तं पप्रच्छुः कुत्र गत्वा वयं निस्तारोत्सवस्य भोज्यमासा-
दयिष्यामः, किमिच्छति भवान्? तदानीं स तेषां द्वयं प्रेरयन् बभाषे युवयोः १३
पुरमध्यं गतयोः सतो र्यो जनः सजलकुम्भं गृहीत्वा युष्मान् साक्षात् करि-
ष्यति तस्यैव पश्चाद् यातं ; स यस्मिन् सदने प्रवेशं करोति तद्भवनपतिं वदतं १४
गुरुराह यत्र सशिष्योहं निस्तारोत्सवीयं भोजनं करिष्यामि सा भोजन-
शाला कुत्रास्ति? ततः स परिष्कृतां सुसज्जितां बृहतीञ्च यां शालां दर्शयि- १५
ष्यति तस्यामस्मदर्थं भोज्यद्रव्याण्यासादयतं। ततः शिष्यौ प्रस्थाय पुरं १६
प्रविश्य च स यथोक्तवान् तथैव प्राप्य निस्तारोत्सवस्य भोज्यद्रव्याणि समा-
सादयेताम्।

अनन्तरं यीशुः सायंकाले द्वादशभिः शिष्यैः सार्द्धं जगाम ; एवं सर्व्वेषु १७
भोजनाय प्रोपविष्टेषु स तानुदितवान् युष्मानहं यथार्थं व्याहरामि, अत्र १८
युष्माकमेको जनो यो मया सह भुंक्ते स मां परकरेषु समर्पयिष्यते। तदानीं १९
ते दुःखिताः सन्त एकैकशस्तं प्रष्टुमारब्धवन्तः स किमहं? पश्चाद् इतर- २०
एकोभिदधे स किमहं? ततः स प्रत्यवदद् एतेषां द्वादशानां यो जनो
मया समं भोजनपात्रे पाणिं मज्जयिष्यति स एव। मनुजतनयार्थे यादृशं २१
लिखितमास्ते तदनुरूपा गतिस्तस्य भविष्यति किन्तु यो जनो मानवसुतं
परपाणिषु समर्पयिष्यते हन्त तस्य जन्माभावे सति भद्रमभविष्यत्।

अपरञ्च तेषां भोजनसमये यीशुः पूपं गृहीत्वा ईश्वरगुणान् अनुकीर्त्य २२
भङ्क्त्वा तेभ्यो दत्त्वा बभाषे, एतद् गृहीत्वा भुञ्जीध्वम् एतन्मम विग्रह-

२३ रूपं। अनन्तरं स कंसं गृहीत्वा ईश्वरस्य गुणान् कीर्त्तयित्वा तेभ्यो ददौ
२४ ततस्ते सर्व्वे पपुः। अपरं स तानवादीद् बहूनां निमित्तं पातितं मम नवीन-
२५ नियमरूपं शोणितमेतत्। युष्मानहं यथार्थं वदामि, ईश्वरस्य राज्ये यावत् सद्योजातं द्राक्षारसं न पास्यामि तावदहं द्राक्षाफलरसं पुन र्न पा-
२६ स्यामि। तदनन्तरं ते गीतमेकं संगीय बहि र्जैतुनं शिखरिणं ययुः।

२७　अथ यीशुस्तानुवाच निशायामस्यां मयि युष्माकं सर्व्वेषां प्रत्यूहो भविष्यति यतो लिखितमास्ते यथा

'मेषाणां रक्षकञ्चाहं प्रहरिष्यामि वै ततः।
मेषाणां निवहो नूनं प्रविकीर्णो भविष्यति।'

२८ किन्तु मदुत्थाने जाते युष्माकमग्रेऽहं गालीलं व्रजिष्यामि। तदा पितरः
२९ प्रतिबभाषे यद्यपि सर्व्वेषां प्रत्यूहो भवति तथापि मम नैव भविष्यति।
३० ततो यीशुरुक्तवान् अहं तुभ्यं यथार्थं कथयामि क्षणदायामद्य
३१ कुक्कुटस्य द्वितीयवाररवणात् पूर्व्वं त्वं वारत्रयं मामपह्नोष्यसे। किन्तु स गाढरूपं व्याहरद् यद्यपि त्वया सार्द्धं मम प्राणो याति तथापि कथमपि त्वां नापह्नोष्ये सर्व्वेऽपीतरे तथैव बभाषिरे।

३२　अपरञ्च तेषु गेत्शिमनीनामकं स्थानं गतेषु स शिष्यान् जगाद
३३ यावदहं प्रार्थये तावदत्र स्थाने समुपविशत। अथ स पितरं याकुबं योहनञ्च गृहीत्वा वव्राज, एवम् अत्यन्तं त्रासितो व्याकुलितश्च तेभ्यः
३४ कथयामास, निधनकालवत् प्राणो मे ऽतीव दुःखमेति यूयं जाग्रतोऽत्र स्थाने
३५ तिष्ठत। ततः स किञ्चिद्दूरं गत्वा भूमावधोमुखः पतित्वा प्रार्थितवानेतत्
३६ यदि भवितुं शक्यं तर्हि दुःसमयोयं मत्तो दूरी भवतु। अपरमुदितवान हे पित र्हे पितः सर्व्वं त्वया साध्यं ततोहेतोरिमं कंसं मत्तो दूरी कुरु
३७ किन्तु तन् ममेच्छातो न तवेच्छातो भवतु। ततःपरं सएत्य तान् निद्रितान् निरीक्ष्य पितरं प्रोवाच हे शिमोन् त्वं किं निद्रासि? दण्डैकम्
३८ अपि जागरितुं न शक्नोषि? परीक्षायां यथा न पतसि तदर्थं सचे-
३९ तनः सन प्रार्थयस्व; मन उद्युक्तमिति सत्यं किन्तु वपुरशक्तिकं। अथ स पुन-

र्जित्वा पूर्व्ववत् प्रार्थयाञ्चक्रे। एवं परावृत्यागत्य पुनरपि तान् निद्रितान् ४०
ददर्श तदा तेषां लोचनानि निद्रया पूर्णानि तस्मात्तस्मै का कथा
कथयितव्या त एतद् बोद्धुं न शेकुः। ततःपरं तृतीयवारं स आगत्य तेभ्यो ४१
ऽकथयद् इदानीमपि शयित्वा विश्राम्यथ? यथेष्टं जातं समयश्चोपस्थितः ४२
पश्यत मानवतनयः पापिलोकानां पाणिषु समर्प्यते। उत्तिष्ठत वयं व्रजामो,
यो जनो मां परपाणिषु समर्पयिष्यते पश्यत स समीपमायाति।

इमां कथां कथयति स एतर्हि द्वादशानाम् एको यिहूदानामकः ४३
शिष्यः प्रधानयाजकानाम् उपाध्यायानां प्राचीनलोकानाञ्च सन्निधेः
खड्गलगुडधारिणो बहुलोकान् गृहीत्वा तस्य समीप उपस्थितवान्।
अपरञ्चासौ परपाणिषु समर्पयिता पूर्व्वमिति सङ्केतं कृतवान् यमहं ४४
चुम्बिष्यामि स एवासौ तमेव धृत्वा सावधानं नयत। अतो हेतोः स आगत्यैव ४५
यीशोः सविधं गत्वा हे गुरो हे गुरो इत्युक्त्वा तं चुचुम्ब। तदा ते तदुपरि ४६
पाणीनर्पयित्वा तं दध्रुः। ततस्तस्य पार्श्वस्थानां लोकानामेकः खड्गं निष्कोा- ४७
षयन् महायाजकस्य दासमेकं प्रहृत्य तस्य कर्णं चिच्छेद। पश्चाद् यीशुस्तान् ४८
व्याजहार खड्गान् लगुडांश्च गृहीत्वा मां चौरं धर्त्तुं समायाताः किं? मध्ये- ४९
मन्दिरं समुपदिशन् प्रत्यहं युष्माभिः सह स्थितवानहं, तस्मिन् काले
यूयं मां नादीधरत किन्त्वनेन शास्त्रीयं वचनं सेद्धं। तदा शिष्यास्तं ५०
परित्यज्य सर्व्वे पलायाञ्चक्रिरे। अथैको युवा मानवो नग्नकाये वस्त्रमेकं ५१
निधाय तस्य पश्चाद् वव्राज; ततो युवलोकास्तस्य धृतवात् स वस्त्रं ५२
विहाय नग्नः पलायाञ्चक्रे।

अपरञ्च यस्मिन् स्थाने प्रधान याजका उपाध्यायाः प्राचीनलोकाश्च ५३
महायाजकेन सह सदसि स्थितास्तस्मिन् स्थाने महायाजकस्य समीपं
यीशुं निन्युः। एवं पितरो दूरे तत्पश्चाद् इत्वा महायाजकस्याट्टालिकां ५४
प्रविश्य किङ्करैः सहोपविश्य वह्नितापं जग्राह। तदानीं प्रधानयाजका ५५
मन्त्रिणश्च यीशुं घातयितुं तत्प्रातिकूल्येन साक्षिणो मृगयाञ्चक्रिरे किन्तु
न प्राप्ताः। अनेकैस्तद्विरुद्धं मृषा साक्ष्ये दत्तेपि तेषां वाक्यानि न समग- ५६

५७ च्छन्त। सर्व्वशेषे कियन्त उत्थाय तस्य प्रातिकूल्येन मृषासाक्ष्यं दत्वा
५८ कथयामासुः, इमं करकृतमन्दिरं विनाश्य दिनत्रयमध्ये पुनरपरम् अकर-
कृतं मन्दिरं निर्म्मास्यामि, इतिवाक्यम् अस्य मुखात् श्रुतमस्माभिरिति।
५९ किन्तु तत्रापि तेषां साक्ष्यकथा न सङ्गताः। अथ महायाजको मध्येसभम्
६० उत्थाय यीशुं व्याजहार त्वयि जना एते यत् साक्ष्यमदुः त्वमेतस्य किम-
६१ प्युत्तरं किं न दास्यसि? किन्तु स किमप्युत्तरं न दत्वा मौनीभूय तस्थौ;
ततो महायाजकः पुनरपि तं पृष्टवान् त्वं सच्चिदानन्दस्य तनय अभिषिक्त-
६२ स्त्राता? तदा यीशुस्तं प्रोवाच भवाम्यहम् एवं मनुष्यपुत्रं सर्व्वशक्तिमतो
६३ दक्षिणपार्श्वे समुपविशन्तं मेघमारुह्य समायान्तञ्च सन्द्रक्ष्यथ। तदा महा-
याजकः स्वं वसनं छित्त्वा व्याहरत् किमस्माकं साक्षिभिः प्रयोजनम् ईश्वर-
६४ निन्दावाक्यं युष्माभिरश्रावि किं विचारयथ? तदानीं सर्व्वे जगदुरयं
६५ निधनदण्डमर्हति। ततः कश्चित् कश्चित् तद्वपुषि निष्ठीवं निचिक्षेप
तथा तन्मुखमाच्छाद्य चपेटेन हत्वा गदितवान् गणयित्वा वद; एवम्
अनुचराश्च चपेटाघातं जघ्नुः।

६६ ततःपरं पितरेऽट्टालिकाधः कोष्ठेतिष्ठति महायाजकस्यैका दासी एत्य तं
६७ वह्नितापं गृह्लन्तं विलोक्य तं सुनिरीक्ष्य बभाषे त्वमपि नासरीययीशोः
६८ सङ्गिनाम् एकोजन आसीः। किन्तु सोपह्नुत्य जगाद तमहं न वेद्मि,
६९ एवं त्वं यत् कथयसि तदप्यहं न बुद्ध्ये। तदानीं पितरे चत्वरं गतवति
७० कुक्कुटो रुराव। अथान्या दासी पितरं दृष्ट्वा समीपस्थान् जनान्
जगाद अयं तेषामेको जनः। ततः स द्वितीयवारम् अपह्नुतवान् पश्चात्
तत्रस्था लोकाः पितरं प्रोचुस्त्वमवश्यं तेषामेको जनः यतस्त्वं गालीलीयो
७१ नरइति तवोच्चारणं प्रकाशयति। तदा स शपथाभिशापौ कृत्वा प्रोवाच
७२ यूयं यस्य कथां कथयथ तं नरं न जानेऽहं। तदानीं द्वितीयवारं कुक्कुटो
ऽरावीत्। एवं कुक्कुटस्य द्वितीयरवात् पूर्व्वं त्वं मां वारत्रयम् अपह्नो-
ष्यसि, इति यद्वाक्यं यीशुना समुदितं तत् तदा संस्मृत्य पितरो रोदितुम्
आरभत।

## १५ पञ्चदशोऽध्यायः।

१ खीष्टस्य पिलातसमीपानयनम् ६ पिलातेन समर्पणम् १६ खीष्टस्योपहासः २१ तस्य क्रुशे वेधनम् २९ तस्य निर्भर्त्सनम् ३३ तस्यार्त्तरावः ३७ तस्य प्राणत्यागः ४० तन्मरणात् परम् स्त्रीणामुपस्थितिः ४२ तस्य श्मशाने स्थापनञ्च।

अथ प्रभाते सति प्रधानयाजकाः प्राञ्च उपाध्यायाः सर्व्वे मन्त्रिणश्च १
इमे सभां कृत्वा यीशुं बन्धयित्वा पिलाताख्यस्य देशाधिपतेः सविधं
नीत्वा समर्पयामासुः। तदा पिलातस्तं पृष्टवान् त्वं किं यिहूदीय- २
लोकानां राजा? ततः स प्रत्युक्तवान् सत्यं वदसि। अपरं प्रधानयाजकास्तस्य ३
बहुषु वाक्येषु दोषमारोपयाञ्चक्रुः किन्तु स किमपि न प्रत्युवाच। तदानीं ४
पिलातस्तं पुनः पप्रच्छ त्वं किं नोत्तरयसि? पश्यैते त्वद्विरुद्धं कतिषु साक्ष्येषु
साक्ष्यं ददति। किन्तु यीशुस्तदापि नोत्तरं ददौ ततः पिलात आश्चर्य्यं ५
जगाम।

अपरञ्च तन्महोत्सवकाले लोकैः कारावद्धे कस्मिंश्चित् जने याचिते ६
देशाधिपतिस्तं मोचयति। ये च पूर्व्वमुपप्लवमकार्षुरुपप्लवे बधमपि कृतवन्त- ७
स्तेषां मध्ये तदानीं बरब्बा नामक एको बद्ध आसीत्। अतोहेतोः पूर्व्वा- ८
परीयां रीतिकथां कथयित्वा लोका उच्चैरुवन्तः पिलातस्य समक्षं निवेद-
यामासुः। तदा पिलातस्तानाचख्यौ तर्हि किं यिहूदीयानां राजानं ९
मोचयिष्यामि युष्माभिः किमिष्यते? यतः प्रधानयाजका ईर्षात एव यीशुं १०
समार्पयन्निति स विवेद। किन्तु यथा बरब्बां मोचयति तथा प्रार्थयितुं ११
प्रधानयाजका लोकान् प्रवर्त्तयामासुः। अथ पिलातः पुनः पृष्टवान् तर्हि १२
यं यिहूदीयानां राजेति वदथ तस्य किं करिष्यामि युष्माभिः किमि-
ष्यते? तदा ते पुनरपि प्रोच्चैः प्रोचुस्तं क्रुशे वेधय। तस्मात् पिलातः १३
कथितवान् कुतः? स किं कुकर्म्म कृतवान्? किन्तु ते पुनश्च रुवन्तो व्याजह्रुस्तं १४
क्रुशे वेधय। तदा पिलातः सर्व्वांल्लोकान् तोषयितुमिच्छन् बरब्बां १५
मोचयित्वा यीशुं कशया प्रहृत्य क्रुशे वेद्धुं तं समर्पयाम्बभूव।

अनन्तरं सैन्यगणोऽट्टालिकाम् अर्थाद् अधिपते र्गृहं यीशुं नीत्वा सेना- १६
निवहं समाहूयत्। पश्चात् ते तं धूमलवर्णवस्त्रं परिधाप्य कण्टकमुकुटं १७

१८ रचयित्वा शिरसि समारोप्य हे यिहूदीयानां राजन् नमस्कार इत्युक्त्वा तं
१९ नमस्कर्त्तुमारेभिरे। एवं तस्योत्तमाङ्गे वेत्राघातं चक्रुस्तद्गात्रे निष्ठीवञ्च
२० निचिक्षिपुः, तथातस्य सम्मुखे जानुपातं प्रणेमुः, इत्थमुपहस्य धूम्रवर्णवस्त्रम्
उत्तार्य्य तद्वस्त्रं तं पर्य्यधापयन् क्रुशे वेद्धुं वहिर्निन्युश्च।
२१ ततःपरं सेकन्दरस्य रूफस्य च पिता शिमोन् नामा कुरीणीयलोक एकः
२२ कुतश्चिद् ग्रामादेत्य पथि याति तं यीशोः क्रुशं वोढुं बलाद् दध्रुः। अथ गुल-
गल्ता अर्थात् शिरःकपालनामकं स्थानं यीशुमानीय ते गन्धरसमिश्रितं
२३ द्राक्षारसं पातुं तस्मै ददुः किन्तु स न जग्राह। पश्चात् प्रहरैकवेलायां ते
२४ तं क्रुशे विविधुः एवं तस्मिन् क्रुशे विद्धे सति तेषामेकैकशः किं प्राप्स्यतीति
२५ निर्णयाय तस्य परिधेयानां विभागार्थं गुटिकापातं चक्रुः। अपरञ्च एष
२६ यिहूदीयानां राजेति लिखितं दोषपत्रं तस्य शिरऊर्द्ध्वम् आरोपयाञ्चक्रुः।
२७ एवं तस्य वामदक्षिणयो द्वौ चौरौ क्रुशे विविधाते। तेनैव 'अपराधिजनैः
२८ सार्द्धं स गणितो भविष्यति' इतिशास्त्रोक्तं वचनं सिद्धमभूत्।
२९ अनन्तरं मार्गे ये ये लोका गमनागमने चक्रुस्ते सर्व्वएव शिरांस्या-
३० न्दोल्य निन्दन्तो जगदुः, रे मन्दिरनाशक रे दिनत्रयमध्ये तन्निर्म्मायक
३१ अधुनात्मानम् अवित्वा क्रुशादवरोह। किञ्च प्रधानयाजका अध्यापकाश्च
तद्वत् तिरस्कृत्य परस्परं चचक्षिरे एष परानावत् किन्तु स्वमवितुं न
३२ शक्नोति। यदीस्रायेलो राजाभिषिक्तस्त्राता भवति तर्ह्यधुनैव क्रुशादवरोहतु
वयं तद् दृष्ट्वा विश्वसिष्यामः; किञ्च यौ लोकौ तेन सार्द्धं क्रुशे ऽविध्येतां
३३ तयोरेकस्तं निर्भर्त्सयामास। अथ द्वितीययामात् तृतीययामं यावत् सर्व्वो-
३४ देशः सान्धकारोभूत्। ततस्तृतीयप्रहरे यीशुरुच्चैरवदत् एली एली लामा
३५ शिवक्तनी अर्थाद् 'हे मदीश मदीश त्वं पर्य्यत्याक्षीः कुतो हि मां।'
तदा समीपस्थलोकानां केचित् तद्वाक्यं निशम्याचख्युः पश्यैष एलियम्
३६ आह्वयति। तत एको जनो धावित्वागत्य स्पञ्जेऽम्लरसं पूरयित्वा तं नडाग्रे
निधाय पातुं तस्मै दत्त्वावदत् तिष्ठ एलिय एनमवरोहयितुम् एति न
वेति पश्यामि।

अथ यीशुरुच्चैः समाहूय प्राणान् जहौ। तदा मन्दिरस्य जवनिका ३७
ऊर्द्ध्वादधः पर्य्यन्ता विदीर्णा द्विखण्डाभूत्। किन्तु इत्थमुच्चैराहूय प्रा- ३८
णान् त्यजन्तं तं दृष्ट्वा तद्रक्षणाय नियुक्तो यः सेनापतिरासीत् सोवदत् ३९
अयम् ईश्वरपुत्त्र इति सत्यम्।

तदानीं मग्दलिनी मरियम् कनिष्ठयाकुबो योसेश्च मातान्यमरियम् ४०
शालोमी च याः सर्व्वाः स्त्रियो गालील्प्रदेशे यीशुं सेवित्वा तदनुगामिन्यो
जाता इमास्तदन्याश्च या अनेका नार्य्यो यीशुना सार्द्धं यिरूशालमम् ४१
आयातास्ताश्च दूरे स्थित्वा तानि ददृशुः।

अथासादनदिनात् अर्थाद् विश्रामवारात् पूर्व्वदिवसीयसायंकाल आगते ४२
ईश्वरराज्यापेक्षिअरिमथीययुषफनामा मान्यमन्त्री समेत्य पिलात- ४३
सविधं निर्भयो गत्वा यीशोर्देहं ययाचे। किन्तु स इदानीं मृतः पिलात ४४
इत्यसम्भवं मत्वा शतसेनापतिमाहूय स कदा मृतइति पप्रच्छ। शतसेना- ४५
पतिमुखात् तज्ज्ञात्वा युषफे यीशोर्देहं ददौ। पश्चात् स सूक्ष्मवासः ४६
क्रीत्वा यीशोः कायमवरोह्य तेन वाससा वेष्टयित्वा गिरौ खात श्मशाने
स्थापितवान् एवं पाषाणं लोठयित्वा द्वारि निदधे। किन्तु यत्र सो- ४७
स्थाप्यत तत् मग्दलिनी मरियम् योसिमातृमरियम् च ददृशतुः।

---

१६ षोडशोऽध्यायः।

१ स्वर्गीयदूतेन ख्रीष्टोत्थानप्रकाशः ९ मग्दलिनीमरियमे दर्शनदानं १२ शिष्य-
द्वयाय दर्शनदानं १४ एकादशशिष्येभ्यो दर्शनदानं आदेशश्च १९ स्वर्गारोहणञ्च।

अथ विश्रामवारे गते सप्ताहप्रथमदिनेऽतिप्रत्यूषे सूर्य्योदयकाले मग्द- १
लिनी मरियम् याकुब्माता मरियम् शालोमी चेमाः सुगन्धिद्रव्यं गृहीत्वा २
तं मर्द्दयितुं श्मशानमुपगताः। किन्तु श्मशानद्वारपाषाणोति वृहन् तं का- ३
ऽपसारयिष्यति इति ताः परस्परं गदन्ति। एतर्हि निरीक्ष्य दारः पाषा- ४
णोऽपसारितइति ददृशुः। पश्चात्ताः श्मशानं प्रविश्य शुक्लवर्णदीर्घ- ५
परिच्छदावृत एको युवा श्मशानदक्षपार्श्वे उपविष्टो दृष्टस्ताभिश्चमत्कृताश्च।
सो वदन् माभैष्ट यूयं क्रुशे हतं नासिरीययीशुं गवेषयथ सोत्र नास्ति ६

श्मशानादुदस्थात्; तै यंत्र स स्थापितः स्थानं तदिदं पश्यत। किन्तु तेन यथोक्तं तथा युष्माकमग्रे गालीलं यास्यते तत्र स युष्माभिः साक्षात् करिष्यते यूयं गत्वा तस्य शिष्येभ्यः पितराय च वार्त्तामिमां कथयत।
८ ताः कम्पिता विस्मिताश्च तूर्णं श्मशानाद् वहिर्गत्वा पलायन्त भयात् कमपि किमपि नावदंश्च।

९ अपरं यीशुः सप्ताहप्रथमदिने प्रत्यूषे श्मशानादुत्थाय यस्याः सप्त-
१० भूतास्त्याजितास्तस्यै मग्दलिनीमरियमे प्रथमं दर्शनं ददौ। ततः सा गत्वा
११ शोकरोदनकृद्भ्योऽनुगतलोकेभ्यस्तां वार्त्तां कथयामास। किन्तु यीशुः पुनर्जीवन् तस्यै दर्शनं दत्तवानिति श्रुत्वा ते न प्रत्ययन्।

१२ पश्चात् तेषां द्वयो र्ग्रामयानकाले यीशुरन्यवेषं धृत्वा ताभ्यां दर्शनं ददौ
१३ पश्चात्तावपि गत्वान्यशिष्येभ्यस्तां कथां कथयाञ्चक्रुः किन्तु तयोः कथामपि ते न प्रत्ययन्।

१४ शेषत एकादशशिष्येषु भोजनोपविष्टेषु यीशुस्तेभ्यो दर्शनं ददौ तथोत्थानात् परं तद्दर्शनप्राप्तलोकानां कथायामविश्वासकरणात् तेषामविश्वा
१५ समनःकाठिन्याभ्यां हेतुभ्यां स तांस्तर्जितवान्। अथ तानाचख्यौ यूयं सर्व्व-
१६ जगद् गत्वा सर्व्वजनान् प्रति सुसंवादं प्रचारयत। तत्र यः कश्चिद् विश्वस्य मज्जितो भवेत् स परित्रास्यते किन्तु यो न विश्वसिष्यति स दण्ड-
१७ यिष्यते। किञ्च ये प्रत्येष्यन्ति तैरीदृग् आश्चर्य्यं कर्म्म प्रकाशयिष्यते ते
१८ मन्नाम्ना भूतान् त्याजयिष्यन्ति भाषा अन्याश्च वदिष्यन्ति। अपरं तैः सर्पेषु धृतेषु प्राणनाशकवस्तुनि पीते च तेषां कापि क्षति र्न भविष्यति; एवं रोगिणां गात्रेषु करार्पिते तेऽरोगा भविष्यन्ति।

१९ अथ प्रभुस्तानित्यादिश्य स्वर्गं नीतः सन् परमेश्वरस्य दक्षिण उपवि-
२० वेश। ततस्ते प्रस्थाय सर्व्वत्र सुसंवादीयां कथां प्रचारयितुमारेभिरे प्रभुस्तु तेषां सहायः सन् प्रकाशिताश्चर्य्यक्रियाभिस्तां कथां प्रमाणवतीं चकार। इति॥

# लूकलिखितसुसंवादः।



## १ प्रथमोऽध्यायः।

१ आभाषः ५ इलीशिबाया गर्भधारणकथनं २६ मरियमो गर्भधारणकथनं ३९ तयोर्द्वयोः साक्षात्करणं ४६ मरियमो गीतं ५७ योहनो जन्मकथनं ६७ तत्पितुः सिखरीयस्य भविष्यद्वाक्यं ८० योहनो वृद्धिश्च।

१ प्रथमतो ये साक्षिणो वाक्यप्रचारकाश्चासन् तेऽस्माकं मध्ये यद्यत्
२ सप्रमाणं वाक्यमर्पयन्ति स्म तदनुसारतोऽन्येपि बहवस्तद्वृत्तान्तं रचयितुं
३ प्रवृत्ताः। अतएव हे महामहिमथियफिल त्वं याः कथा अशिक्षथा-
४ स्तासां दृढप्रमाणानि यथा प्राप्नोषि तदर्थं प्रथममारभ्य तानि सर्व्वाणि
ज्ञात्वाहमपि, अनुक्रमात् सर्व्ववृत्तान्तान् तुभ्यं लेखितुं मतिमकार्षम्।

५ यिहूदादेशीयहेरोद्नामके राजत्वं कुर्व्वति अवीययाजकस्य
६ पर्य्यायाधिकारी सिखरीयनामक एको याजक एवं हारोन्वंशोद्भवा
इलीशिवाख्या तस्य जाया द्वाविमौ निर्दोषौ प्रभोः सर्व्वाज्ञा व्यवस्थाश्च
७ चरित्वा ईश्वरदृष्टौ धार्म्मिकावास्ताम्। तयोः सन्तान एकोपि नासीत् यत
८ इलीशिवा बन्ध्या तौ द्वावेव वृद्धावभवताम्। यदा स्वपर्य्यायानुक्रमेण सिख-
९ रीय ईश्वरस्य समक्षं याजकीयं कर्म्म करोति तदा यज्ञस्य दिनपरिपाट्या
परमेश्वरस्य मन्दिरे प्रवेशकाले धूपज्वालनं कर्म्म तस्य करणीयमासीत्।
१० तद्धूपज्वालनकाले लोकनिवहे प्रार्थनां कर्तुं बहिस्तिष्ठति सति सिख-
११ रीयो यस्यां वेद्यां धूपं ज्वालयति तद्दक्षिणपार्श्वे परमेश्वरस्य दूत एक उप-
१२ स्थितो दर्शनं ददौ। तं दृष्ट्वा सिखरीय उद्विविजे शशङ्के च। तदा सदूतस्तं
१३ बभाषे हे सिखरीय मा भैस्तव प्रार्थना ग्राह्या जाता तव भार्य्या इली-
१४ शिवा पुत्रं प्रसोष्यते तस्य नाम योहन् इति करिष्यसि। किञ्च त्वं सानन्दः

सहर्षश्च भविष्यसि तस्य जन्मनि बहव आनन्दिष्यन्ति च। यतोहेतोः स १५
परमेश्वरस्य गोचरे महान् भविष्यति तथा द्राक्षारसं सुरां वा किमपि न
पास्यति, अपरं जन्मारभ्य पवित्रेणात्मना परिपूर्णः सन् इस्रायेल् वंशीयान् १६
अनेकान् प्रभोः परमेश्वरस्य मार्गमानेष्यति। एवं सन्तानान् प्रति पितृणां १७
मनांसि धर्म्मज्ञानं प्रत्यनाज्ञाग्राहिणश्च परावर्त्तयितुं, प्रभोः परमेश्वरस्य
सेवार्थम् एकां सज्जितजातिं विधातुञ्च स एलियरूपात्मशक्तिप्राप्तः
तस्याग्रे गमिष्यति। तदा सिखरीयो दूतमवादीत् कथमेतद् वेत्स्यामि १८
यतोहं वृद्धो मम भार्य्या च वृद्धा। ततो दूतः प्रत्युवाच परमेश्वरस्य साक्षा- १९
द्वर्त्ती जिब्रायेल्नामादूतोहं त्वया सह कथां गदितुं तुभ्यमिमां शुभवार्त्तां
दातुञ्च प्रेषितः। किन्तु मदीयं वाक्यं काले फलिष्यति तत् त्वया न प्रती- २०
तम् अतः कारणाद् यावदेव तानि न सेत्स्यन्ति तावत् त्वं वक्तुमशक्तो मूको
भव। तदानीं ये ये लोकाः सिखरियमपैक्षन्त ते मध्येमन्दिरं तस्य बहु- २१
विलम्बाद् आश्चर्य्यं मेनिरे। तस्मिन् वहिरागते सति यदा किमपि २२
वाक्यं वक्तुमशक्तः सङ्केतं कृत्वा निःशब्दस्तस्थौ तदा मध्येमन्दिरं कस्य
चिद् दर्शनं तेन प्राप्तम् इति सर्व्वे बुबुधिरे। अनन्तरं तस्य सेवन-
पर्य्याये सम्पूर्णे सति निजगेहं जगाम। कतिपयदिनेषु गतेषु तस्य २३
भार्य्या इलीशिवा गर्ब्भवती बभूव पश्चात् स पञ्चमासान् संगोप्याकथयत् २४
लोकानां समक्षं ममापमानं खण्डयितुं परमेश्वरो मयि दृष्टिं पातयित्वा २५
कर्म्मेदृशं कृतवान्।

अपरञ्च तस्या गर्ब्भस्य षष्ठे मासे जाते गालील् प्रदेशीयनासरित्पुरे २६
दायूदोवंशीयाय युषफ्नाम्ने पुरुषाय या मरियम्नामकुमारी वाग्दत्ता-
सीत् तस्याः समीपं जिब्रायेल् दूत ईश्वरेण प्रहितः। स गत्वा जगाद हे २७
ईश्वरानुगृहीतकन्ये तव शुभं भूयात् प्रभुः परमेश्वरस्तव सहायोस्ति २८
नारीणां मध्ये त्वमेव धन्या। तदानीं सा तं दृष्ट्वा तस्य वाक्यत उद्विज्य २९
कीदृशं भाषणमिदम् इति मनसा चिन्तयामास। ततो दूतोऽवदत् हे ३०
मरियम् भयं मा कार्षीः, त्वयि परमेश्वरस्यानुग्रहोस्ति। पश्य त्वं गर्ब्भं धृत्वा ३१

३२ पुत्रं प्रसोष्यसे तस्य नाम यीशुरिति करिष्यसि। स महान् भविष्यति, एवं सर्व्वेभ्यः श्रेष्ठस्य पुत्त्र इति ख्यातिं गमिष्यति; अपरं प्रभुः परमेश्वरस्तस्य
३३ पितु र्दायूदः सिंहासनं तस्मै दास्यति; तथा स याकुबो वंशोपरि सर्व्वदा
३४ राजत्वं करिष्यति, तस्य राजत्वस्यान्तो न भविष्यति। तदा मरियम् तं दूतं
३५ बभाषे नाहं पुरुषसङ्गं करोमि तर्हि कथमेतत् सम्भविष्यति? ततो दूतोऽकथयत् पवित्र आत्मा त्वामाश्रयिष्यति तथा सर्व्वश्रेष्ठस्य शक्तिस्तवोपरि
३६ छायां करिष्यति ततोहेतोस्तव गर्भाद् यः पवित्रबालको जनिष्यते स
३७ ईश्वरपुत्त्र इति ख्यातिं प्राप्स्यति। अपरञ्च पश्य तव ज्ञातिरिलीशेवा यां सर्व्वे बन्ध्यामवदन् इदानीं सा वार्द्धक्ये सन्तानमेकं गर्भेऽधारयत् तस्य षष्ठ-
३८ मासोऽभूत्। किमपि कर्म्म नासाध्यम् ईश्वरस्य। तदा मरियम् जगाद पश्य प्रभोरहं दासी मह्यं तव वाक्यानुसारेण सर्व्वमेतद् घटताम्; अनन्तरं दूतस्तस्याः समीपात् प्रतस्थे।

३९ अथ कतिपयदिनात् परं मरियम् तस्मात् पर्व्वतमयप्रदेशीययिहू-
४० दाया नगरमेकं शीघ्रं गत्वा सिखरिययाजकस्य गृहं प्रविश्य तस्य जायाम्
४१ इलीशेवाम् सम्बोध्यावदत्। ततो मरियमः सम्बोधनवाक्ये इलीशेवायाः
४२ कर्णयोः प्रविष्टमात्रे सति तस्या गर्भस्थबालको ननर्त्त। तत इलीशेवा पवित्रेणात्मना परिपूर्णा सती प्रोच्चैर्गदितुमारेभे योषितां मध्ये त्वमेव
४३ धन्या तव गर्भस्थः शिशुश्च धन्यः। त्वं प्रभोर्माता मम निवेशने त्वया चर-
४४ णावर्पितौ ममाद्य सौभाग्यमेतत्। पश्य तव वाक्ये मम कर्णयोः प्रविष्ट-
४५ मात्रे सति ममोदरस्थः शिशुरानन्दान् ननर्त्त। या स्त्री व्यश्वसीत् सा धन्या यतोहेतोस्तां प्रति परमेश्वरोक्तं वाक्यं सर्व्वं सिद्धं भविष्यति। तदानीं मरियम् जगाद

४६ मनो मम परेशस्य धन्यवादं करोति हि।
४७ ममात्मा तारकेशे च समुल्लसति सर्व्वथा।
४८ अकरोत् स प्रभु र्दृष्टिं स्वदास्या दुर्गतिं प्रति।
पश्याद्यारभ्य मां धन्यां वक्ष्यन्ति पुरुषाः सदा।

४९ यः सर्व्वशक्तिमान् यस्य नामापि च पवित्रकं।
सएव सुमहाकर्म्म मदर्थं कृतवान् किल।
५० ये च बिभ्यति वै तस्मात् तेषां सन्तानपंक्तिषु।
करुणा च तदीया तु सर्व्वदैव हि तिष्ठति।
५१ स्वबाहुबलतस्तेन प्राकाश्यत पराक्रमः।
मनःकुमन्त्रणासार्द्धं विकीर्य्यन्तेऽभिमानिनः।
५२ सिंहासनगणाल्लोकान् बलिनश्चावरोह्य सः।
पदेषूच्चेषु लोकांस्तु चुद्रान् संस्थापयत्यपि।
५३ चुधितान् मानवान् द्रव्यैरुत्तमैः परितर्प्य सः।
सकलान् धनिनो लोकान् विसृजेद् रिक्तहस्तकान्।
५४ इब्राहीमि च तद्वंशे या दयास्ति सदा तु तां।
स्मृत्वा पुरापितॄणां नो यथा साचात् प्रतिश्रुतं।
५५ इस्रायेलमेवकस्तेन तथोपक्रियते स्वय॥

अनन्तरं मरियम् प्रायेण मासत्रयम् इलीशिवया सहोषित्वा व्याघुट्य ५६ निजनिवेशनं ययौ।

तदनन्तरम् इलीशिवायाः प्रसवकाल उपस्थिते सति सा पुत्रं ५७ प्रासोष्ट। ततः परमेश्वरस्तस्यां महानुग्रहं कृतवान् एतत् श्रुत्वा समीप- ५८ वासिनः कुटुम्बाश्चागत्य तया सह मुमुदिरे। तथाष्टमे दिने ते बालकस्य त्वचं ५९ छेत्तुम् एत्य तस्य पितृनामानुरूपं तन्नाम सिखरीय इति कर्त्तुमीषुः। किन्तु तस्य माताकथयत् तन्न, नामास्य योहन् इति कर्त्तव्यम्। तदा ते ६० व्याहरन् तव वंशमध्ये नामेदृशं कस्यापि नास्ति। ततःपरं तस्य पितरं ६१ सिखरीयं प्रति सङ्केत्य पप्रच्छुः शिशोः किं नाम कारिष्यते? ततः स फलकमेकं ६२ याचित्वा लिलेख तस्य नाम योहन् भविष्यति। तस्मात् सर्व्वे आश्चर्य्यं मेनिरे; ६३ एवं तत्क्षणं सिखरीयस्य जिह्वाजाड्येऽपगते स मुखं व्यादाय स्पष्टवर्णमु- ६४ च्चार्य्य ईश्वरस्य गुणानुवादं चकार। तस्माच्चतुर्दिक्स्थाः समीपवासिलोका ६५ भयं गता एवमेताः सर्व्वाः कथा यिहूदायाः पर्व्वतमयप्रदेशस्य सर्व्वत्र

६६ प्रचारितास्तस्मात् श्रोतारो मनःसु स्थापयित्वा कथयाम्बभूवुः कीदृशोयं बालो भविष्यति ; अथ परमेश्वरस्तस्य सहायोऽभूत्।

६७ तदा योहनः पिता सिखरीयः पवित्रेणात्मना परिपूर्णः सन् एतादृशं भविष्यद्वाक्यं कथयामास

६८ इस्रायेलः प्रभु र्यस्तु स धन्यः परमेश्वरः।
अनुगृह्य निजाल्लोकान् सएव परिमोचयेत्।
६९ यथा वयं विमुच्याम विपक्षाणान्तु हस्ततः।
यावज्जीवञ्च धर्म्मेण सारल्येन च निर्भयाः।
७० सेवामहै तमेवैकम् एतत्कारणमेव च।
स्वकीयं हि पवित्रञ्च संस्मृत्य नियमं सदा।
७१ कृपया पुरुषान् पूर्व्वान् निकषार्थात्तु नः पितुः।
इब्राहीमः समीपे यं शपथं कृतवान् पुरा।
७२ तमेव सफलं कर्त्तुं तथा शत्रुगणस्य च।
ऋतीयाकारिणश्चैव करेभ्यो रक्षणाय नः।
७३ सृष्टेः प्रथमतः स्वीयैः पवित्रै र्भाविवादिभिः।
यथोक्तवान् तथा स्वस्य दायूदः सेवकस्य तु।
७४ वंशे त्रातारमेकं सः समुत्पादितवान स्वयम्।
७५ अतो हे बालक त्वन्तु सर्व्वेभ्यः श्रेष्ठएव यः।
तस्यैव भाविवादीति प्रविख्यातो भविष्यसि।
७६ अस्माकं चरणान् क्षेमे मार्गे चालयितुं सदा।
एवं ध्वान्तेऽर्थतो मृत्योश्छायायां ये तु मानवाः।
७७ उपविष्टास्तु तानेव प्रकाशयितुमेव हि।
कृत्वा महानुकम्पां हि यामेव परमेश्वरः।
७८ ऊर्द्धात् सूर्य्यमुदाय्यैवास्मभ्यं प्रादात्तु दर्शनं।
तयानुकम्पया स्वस्य लोकानां पापमोचने।
७९ परित्राणस्य तेभ्यो हि ज्ञानविश्राणनाय च।
प्रभो र्मार्गं परिष्कर्त्तुं तस्याग्रगामी भविष्यसि।